## त्रयोदशोऽध्यायः ॥ १३ ॥

——:o:——

### अथ यूषवर्ग ॥

### प्रथम कुलथीके यूषका लक्षण ॥

कुलत्थयूषो मधुरः कषाया भवेच्च रक्तस्य कफस्य हन्ता ॥
महाश्मरीपायुजमेदहन्ता सन्दीपनो मेहविशोषणश्च ॥ १ ॥

कुलथीका यूष मधुर है कसैला है रक्तसहित कफको नाशता है, और पथरी, ववासीर, मेद, इन्होंको नाशता है अग्निको जगाता है और प्रमेहको शोषता है ॥ १ ॥

### अथ हरडके यूषका गुण ॥

भवेदाढक्या मधुरश्च यूषं विशोषणं वातनिवारणञ्च ॥
श्लेष्मापहं पित्तहरं ज्वराणां पृथक् पृथक् कृमिहृत् दारुणञ्च ॥२॥

हरडका यूष मधुर है शोषता है वातको दूर करता है और दारुणरूपी कफको और पित्तको हरता है ज्वरको शांत करता है कृमिरोगको नाशता है ॥ २ ॥

### अथ मूगके यूषका गुण ॥

शीतलं मधुरं मौद्गयूषं पित्तविकारजित्॥
तच्च वातहरं प्रोक्तं ज्वराणां शमनं परम् ॥ ३ ॥

मूगका यूष शीतल है मधुर है पित्तके विकारको जीतता है वातको हरता है और ज्वरोंको निश्चय शांत करता है ॥ ३ ॥

### अथ चनाके यूषका गुण॥

कषायं कटुकं चोष्णं वातघ्नं कफदोषकृत् ॥
रक्तपित्तं निहन्त्याशु चणानां यूषमुच्यते ॥ ४ ॥

चनाका यूष कसैला है चर्चरा है गर्म है वातको नाशता है कफको करता है और रक्त पित्तको निश्चय नाशता है ॥ ४ ॥

### अथ उडदके यूषका गुण ॥

घनं सवातं कफकृन्माषयूषश्च पित्तकृत् ॥
अम्लं पर्य्युषितं तच्च तैलपाने च शस्यते ॥ ५॥

पथ्या बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षिणः॥ केदारप्रभवा वृक्षा वातपि त्तविनाशिनः ॥ १० ॥ रक्तपित्तविकारघ्ना वातलाः कफकारकाः ॥ देशे देशे विभिन्नानि नामानि परिलक्षयेत् ॥११॥ समान्गुणैश्च सर्वांस्तान्भूमिभागोद्भवान्विदुः॥१२॥शालयश्छिन्नरोहाश्च मूत्रला वातला हिमाः १३

रक्तशालिचावल त्रिदोषको नाशता है नेत्रोंमें हित है मूत्ररोगको नाशता है महाशालि भारा है धातुको पुष्ट करता है नेत्रोंमें हित है बलको बढाता है ॥ ३ ॥ षष्टिका शीतला है भारा है त्रिदोषको हरता है और मधुर है ॥४॥ जीरका वातको और पित्तको हरता है कलमा कफको और पित्तको नाशता है कपिंजला कफको करता है मागधी कफको और वातको करता है ॥ ५ ॥ बिलवासी भारा है पित्तको नाशता है वीर्यको बढाता है शूकला पित्तको और वातको नाशता है कचोरा पित्तको नाशता है ॥ ६ ॥ गरुडा वातको नाशता है पित्तको और मूत्ररोगको हरता है रुक्मवंती हलका है और रुचि, बल, पुष्टि, इन्होंको करता है ॥७॥ अन्यप्रकारका कलमा हलका है पथ्य है वातको और कफको बढाता है और बिल्वजा, मागधी, पीता,ये तीनों गुण और दोषों करके समान है ॥ ८ ॥ खंजरीटा शाली रुचिको और बलको करता है मूत्रदोषको नाशता है और परिश्रमको हरता है दग्धग्राममें और पर्वतमें उपजे शालिचावल हलका पाकवाले हैं ॥९॥ खेतमें उपजे शालिचावल सुंदर पथ्य हैं विष्ठाको और मूत्रको बांधते हैं रूखे हैं कफको नाशता है वातको और पित्तको नाशता हैं ॥१०॥ कोईक शालि रक्तपित्तके विकारको नाशते हैं वातल हैं और कफको करते हैं इन शालियोंके नाम देशदेशमें भिन्न जानने ॥ ११ ॥ पृथिवीके भागोंसे उपजे सबप्रकारके शालि गुणोंसे समान जानने ॥ १२ ॥ छिलकासे वर्जित शालि मूत्रको उपजाते हैं विष्ठाको बांधते हैं और कफके कालमें सुंदर पथ्य हैं मूत्रको देते हैं वातको उपजाते है और शीतल हैं ॥१३॥

## अथ क्षुद्रधान्यवर्ग ॥

श्यामाकः कोद्रवः कण्डूर्मर्कटी कपिकच्छुरा ॥
क्षुद्रधान्यमिदं प्रोक्तं शृणु पुत्र ! प्रवक्ष्यते ॥ १४ ॥

शामक, कोदू, कंडू, मर्कटी, कपिकच्छुरा, इन नामोंसे क्षुद्रधान्य कहा है अब मैं कहताहूं हे पुत्र! सुन ॥ १४ ॥

## अथ श्यामक और कोदूके गुण दोष ॥

श्यामाकः शोषणो रूक्षो वातलः कफवारणः ॥ कोद्रवो रूक्षो ग्राही स्याद्रक्तपित्तविशोषणः ॥ १५ ॥ नाधिककफकृत् प्रोक्तो रुच्यः स्वादुः प्रकीर्त्तितः ॥ १६ ॥

माध्वीक मदिरा शीतल है खट्टी है मधुर है कसैली है गर्म है और पित्तरोग—ववासीर, श्वासरोग, अतीसार, प्रमेह, शूल, अफारा, इन्होंको नाशती है सब चीजको जराती है अग्निको जगाती है और वात—आमवात—वमन—सब प्रकारके रोग—इन्होंको नाशती है॥ ८॥

अथ मदिराका गुण ॥

कषाया मधुरा चाम्ला सुरा सन्दीपनी मता॥
कासार्शोग्रहणीस्तन्यमूत्ररोगविनाशिनी॥ ९॥

मदिरा कसैली है खट्टी है अग्निको जगाती है और खांसी—ववासीर—ग्रहणीदोष—दूधरोग—मूत्ररोग—इन्होंको नाशती है॥ ९॥

अथ पैष्टीमदिराका गुण॥

पैष्टी सन्दीपनी रुच्या कफकृद्वातनाशिनी॥
पित्तला पाण्डुरोगाणां कारिणी बहुधा मता॥ १०॥

पैष्टी मदिरा अग्निको जगाती है रुचिमें हित है कफको करती है वातको नाशती है पित्तको उपजाती है और विशेष करकै पांडुरोगोंको करती है॥ १०॥

अथ महुआ वृक्षकी मदिराका गुण॥

वातपित्तकरो रूक्षः कषायो विशदो गुरुः॥
श्लेष्मलो भेदनो ग्राही मूत्रकृच्छ्रशिरोऽर्त्तिनुत्॥ ११॥

महुआकी मदिरा वातको और पित्तको करती है रुखी है कसैली है सुंदर है भारी है कफको करती है मलको पतला करती है कब्जको करती है मूत्रकृच्छ्रको और शिरके रोगको नाशती है॥ ११॥

अथ ताडकी मदिराका गुण॥

श्लेष्मदोषकरा वृष्या वातला श्लेष्मवर्द्धनी॥
कासहृल्लासविध्वंसकरणा ताडमण्डिका॥ १२॥

ताडकी मदिरा कफको करती है वीर्यमें हित है वायुको उपजाती है कफको बढाती है और खांसीको तथा थुकथुकीको नाशती है॥ १२॥

अथ मदिराकी विशेषता॥

पूर्णे कषायपित्ते च योगयुक्ता सुरा हिता॥ बहुदोषहरा चैव श्लेष्मरोगे विशेषतः॥ १३॥ श्रमज्वरातुरे शोषे शोफपाण्ड्वामये क्षये॥ मतेः क्क

श्रीः

2116 - 1950

# हारीतसंहिता.

श्रीमदात्रेयमहर्षिहारीतमुनिसंवादरूपा ।

( वैद्यकग्रन्थः )

वेरीनिवासिविबुधशिवसहायसूनुवैद्यरविदत्तशास्त्रयनु-
वादितया भाषाव्याख्यया समन्विता ।

सेयं

खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनय-
गोविन्दशास्त्रिणा सम्यक्परिशोधिता ।

मुंबय्यां

श्रीकृष्णदासात्मजेन

खेमराजेन

"गणपत कृष्णाजी" मुद्रणालये मुद्रयित्वा प्रकाशिता ।

...कर्त्ता
ऋषिभाषित
...र वैसेके वैसेही
...मह नहीं है. इसवास्ते
शके १८१५ ...र्थ है. और अ...त्र अच्छी रीतिसें शुद्ध किया-
...ै ग्रंथको अवश्य संग्रहमें रखकर रोगनिवारण



आपका.

...णदास-"श्रीवेङ्कटेश्वर" छापखाना.

मुंबई.

मेदके क्षय होनेमें मंदबल रहै संज्ञा नहीं रहै अंगभंगहो गमनहो कठोरता रहै और श्वास, अत्यंत खांसी, अरुचि, मंदाग्नि, शरीरमें शोपहो, ये उपद्रव होते हैं ॥ २१ ॥

## अथ अस्थिक्षयका लक्षण ॥

अस्थिक्षये स्याद्‌तिमन्दचेष्टता मन्दवीर्य्य इति मेदसः क्षये ॥ विसंज्ञता कृशता च कम्पना अङ्गभङ्गवमनं परुषता ॥२२॥ शोषदोषसदनं च शोफिता विकम्पनं शोषरुषश्च जायते ॥ भिषग्वर ! त्वं परिवेद लक्षणं मज्जाक्षये कम्पनमेव वास्ति ॥ २३ ॥

अस्थिक्षयमें अतिमंद चेष्टाहो, वीर्यमंद होजावै मुटाका नाश होजावे संज्ञा नहीं रहे माडापनहो, कंपना रहै, अंगभंगहो, वमनहो, कठोरताहो ॥ २२ ॥ और शोपहो वातआदिक दोषोंकी शिथिलताहो, शोजाहो, कंपनाहो, रुक्षताहो हेवैद्योंमें श्रेष्ठ हारीत ! तू इन लक्षणोंको जान और मज्जाके क्षयमें कंपनाहो ॥ २३ ॥

## अथ वीर्यक्षयका लक्षण ॥

भ्रमः क्लमः स्याद्‌तिमन्दचेष्टः शोफो निशाजागरणं च तन्द्रा ॥ मन्दज्वरः शोषसमो मनुष्ये शुक्रक्षये चाङ्गविचेष्टितानि ॥ २४ ॥ रूक्षभ्रमकम्पनशोषरोषस्त्रीद्वेषितादीनि ॥ विरूपता च वैकल्यं सन्धिषु जातशोषः ॥ २५ ॥

भ्रमहो, ग्लानिहो, मंदचेष्टाहो, शोजाहो, रात्रिमें निद्रा नहींआवे, तंद्रारहै, मंदज्वरहो, शोषहो, ये लक्षण हैं, और मनुष्यके वीर्यक्षय होनेमें अंगमें चेष्टा नहींरहै ॥ २४ ॥ रूपापनहो, भ्रमहो, कंपना, शोष, रोष, वैरभाव, विरूपता, विकलताहो संधियोंमें शोपहो ॥ २५ ॥

## अथ रसरक्तवृद्धिकारक औषध ॥

इदानीं संप्रवक्ष्यामि भेषजानि यथाक्रमम् ॥ स्नेहनं रूक्षणं चैव तथा विम्लापनं हितम् ॥ २६ ॥ जाङ्गलानि च मांसानि भोजनानि च सेवयेत् ॥ गुडूची शृङ्गवेरश्च यवानीक्वथितं जलम् ॥ २७ ॥ मरिचैः क्वथितं दुग्धं पाने रात्रौ प्रशस्यते ॥ तेन रसानां वृद्धिः स्याच्छीघ्रं तस्माद्विमुच्यते ॥ २८ ॥ रसानां वृद्धिकरणं गोधूमयवशालीनाम् ॥ क्वथितानि भिषक्श्रेष्ठैर्जाङ्गलानि विशेषतः ॥ २९ ॥

अब यथाक्रमसे औषधोंको कहते हैं स्नेहन, रूक्षण, विम्लापन ये कर्म करनें हित हैं ॥ २६ ॥ और जांगलदेशके जीवोंका मांस भोजनमें हित है और गिलोय, अदरक, अजमा-

# भावप्रकाश.

सबको जाहिर करनेमे आता है कि हमारे यहां भाषा टीकासहित भावप्रकाश छपरहा है ऐसा भावप्रकाश आज तक कहीं नहीं छपा. न मानो तो आध आनेकी टिकट भेजकर नमूना तो देखिये.

## ए ग्रंथ नवीन छपके तयार हैं.

| | | |
|---|---|---|
| पथ्यापथ्य सटीक | ... ... | किं० १२ आने भाडा २ आने हैं. |
| चिकित्साचक्रवर्त्ती | ... ... | किं० १ रुपा भाडा ३ आने हैं. |

अथ आम्रादि नस्य ॥

आम्रास्थिजम्बूद्भवशर्कराढ्यं नस्यं सिताढ्यं हितकृज्ज्वराणाम् ॥
नासाप्रवृत्तं रुधिरं निहन्ति हिक्कासच्छर्दिश्वसनं विमर्दि ॥ ३८॥

और आंबकी गुठली जामनकी गुठली इन्होंको पीस खांडमें मिला अथवा मिसरीमें मिला नस्य देनेंसे ज्वरोंका नाश होता है और नासिकामें प्रवृत्तहुआ रुधिरका नाश होता है और हिचकी वमन, श्वास, इन्होंका नाश होता है ॥ ३८ ॥

अथ पलांड्वादि नस्य ॥

पलाण्डुपत्रनिर्यासनस्यं नासाग्रजावहम् ॥
यष्टीमधूमधुयुतं पश्चान्नस्येऽस्रजं जयेत् ॥ ३९ ॥

और प्याजके पत्तोंकी नस्य देनेंसे रक्तपित्तरोग दूर होता है और मुलहटी, शहद, इन्होंकी नस्य देनेंसेभी शीघ्रही इसरोगका नाश होता है ॥ ३९ ॥

अथ वासादिपानक ॥

वासापत्ररसं विधाय मतिमान्योज्यानि चेमानि तु रोध्रं चोत्पलमृत्तिका समधुकं कुष्ठं प्रियङ्ग्वन्वितम् ॥ चूर्णं पुष्परसेन पाचकमिदं पित्ताश्रयाणां हितं कासकामलपाण्डुरोगक्षतजश्वासापमर्दि भवेत् ॥ ४० ॥

और वांसाके पत्तोंके रसको निचोड तिसमें लोध, कमलकी जडकी मृत्तिका, मुलहटी, माळकांगनी, इन्होंका चूर्ण मिला और वांसाके पत्तोंका रस मिला फिर इसको खावै यह पाचक है और पित्ताशयवालोंको हित है और खांसी, कामला, पांडुरोग, चोटसे उपजाहुआ श्वासरोग, इन्होंको नाशता है ॥ ४० ॥

अथ दाडिमादि रस ॥

रसो हितो दाडिमपुष्पकस्य तथैव किञ्जल्करसोत्पलस्य ॥
लाक्षारसो वा पयसा च नस्याद्घ्राणप्रवृत्तं रुधिरं रुणद्धि ॥ ४१ ॥

और अनारदानाका रस तथा कमलकी केशर और लाखका रस इन्होंकी दूधके संग नस्य देनेंसे नासिकामें प्रवृत्तहुआ रुधिर रुकजाता है ॥ ४१॥

अथ मुखमें प्रवृत्तहुआ रुधिरकी चिकित्सा ॥

दाडिमपुष्पादिनस्य ॥

यदि वदनपथेऽसृक्प्रवृत्ते तस्य कुर्य्यात्प्रतिविधिर्विहितः स्याद्वक्ष्यते मानुषस्य ॥ भवति न सुखसाध्यं लोहितं मानुषेषु तदनु युवतियोन्यां रक्तवाहस्त्वसाध्यः ॥ ४२ ॥ मधु मधुकमुशीरं कञ्जकिञ्जल्कदूर्वारसमि

और श्वास, शोप, भ्रम, तृषा इन्होंको शीघ्रही नाशता है॥ ४८ ॥ और जामन आंव, इन्होंके पत्ते हरडै इन्होंको खांड और शहदमें मिला खानेंसे मुखके रक्तरोगका निवारण होता है ॥ ४९ ॥ वड, अर्जुनवृक्ष, कदंव, जामन, आंव, खैर इन्होंमेंसे कोइसे वृक्षकी पीपली और शहद मिला अवलेह वना चाटनेंसे मुखमें प्राप्तहुआ रक्तका निवारण होता है ॥ ५० ॥

## अथ शतावरीघृत ॥

शतावरी मधुकं वला ससिता काकोलिका दाडिमा मेदःक्षीरविदारिका च फलिनी स्यात्तिन्तिडीकं वला ॥ सिद्धा गोपयसाज्यकं हितमिदं पाने तथा वस्तिषु योनौ मेढ्रगुदप्रवृत्तरुधिरं हन्यात्सकासक्षयम् ॥ ५१ ॥

शतावरी, मूलहटी, खैरैंहटी, मिसरी, काकोली, अनारदाना, मेदा, विदारीकंद, मालकांगनी, अमली, खैरेहटी, इन औषधोंको गौके दूधमें पकावे फिर तिसमें घृत मिला तिसको सिद्ध करै यह घृत पीनेंमें तथा वस्तिकर्ममें हित है और योनि, लिंग, गुदा, इन्होंमें प्रवृत्तहुआ रक्तको नाशता है और खांसीको दूर करता है ॥ ५१ ॥

## अथ मृद्वीकाआदिघृत ॥

मृद्वीका मधुकं विदारिवसुधा नीली समङ्गफलाः काकोल्यो बृहती युगं वृषमहामेदासितं चन्दनम् ॥ जातीपल्लवपटोलश्यामामृतासञ्जीवकाः साभया मेदे द्वे च कुचन्दनं मधुरसाः श्यामाः समांशास्त्वमी॥५२॥ पक्त्वा गोपयसा विशुद्धविधिना सिद्धं चतुर्थांशकं मत्स्यण्डी मधुकं च सिद्धमिति चेत्पानं प्रशस्तं नृणाम् ॥ स्त्रीणां चापि हितं निहन्ति रुधिरं पित्तादुदे वा भवे मेढ्रे चापि च रोमकूपकपथे वृत्तं निहन्यात्स्रजम् ॥ ५३ ॥ एतद्द्राक्षाभिधानं घृतमपि विहितं रक्तपित्ते ज्वरे वा वातास्रे योनिशूले भ्रममदशिरसोन्मादरक्तप्रमोहे ॥ पित्ताम्लेऽतिकुष्ठे क्षयक्षतरुधिरे राजयक्ष्मेऽथ पाण्डौ पाने बस्तौ च नस्ये हितमपि मनुजां भाषितं चात्रिणा च ॥ ५४ ॥

मुनक्कादाख, मुलहटी, विदारीकंद, लघुखजूरी, नील, मंजीठ, त्रिफला, काकोली, दोनों प्रकारकी कटेहली, वांसा, महामेदा, सफेद चंदन, जावित्री, परवल, निशोत, गिलोय, जीवक, मानुषरं॰ महामेदा, लालचंदन, सौंफ, पीपल, इनसबोंको समान भाग ले ॥ ५२ ॥ फिर रक्तवाह॰ पकावे फिर चतुर्थांश वाकी रहे तव उतारि राव, मुलहटीका चूर्ण इन्होंको मिलावे

# प्रस्तावना.





सर्व महाशय विद्वज्जनोंकूं विदित होकि, इस अनाद्यनंत संसारमें प्रथम सुख निरोगी काया कहाती है. वह शारीरिक आरोग्यता जिस साधनसें कीजाती है, उसको वैद्यकशास्त्र कहते हैं. इसीकूंही आयुर्वेदभी कहते हैं. यह आयुर्वेद ऋग्वेदका उपवेद है. प्रमाण—"ऋग्वेदादायुर्वेदं,–यजुर्वेदाद्धनुर्वेदम्" इत्यादिक हैं इस आयुर्वेदके ऊपर अनेक ऋषिओंनें स्वस्वअनुभवकेसाथ पृथक्पृथक् वैद्यकशास्त्रसंहिता निर्माण करी हैं.–वे वैद्यकशास्त्र की अन्य अन्य संहिता वडी विस्तारसें युक्त हैं. परंतु श्रीमान् आत्रेयमहर्षि और हारीतमुनि इन दोनों गुरु शिष्योंके संवादसें हारीतसंहितानामक संहिताके दो ग्रंथ निर्माण किये गयेहै. यह दो ग्रंथ एक वृहद्धारीतसंहिता और एक लघुहारीतसंहिता इस नामसें विख्यात है. तहां वृहद्धारीतसंहिता ग्रंथ वहोत विस्तीर्ण होनेंसे अल्पप्रज्ञ आधुनिक अल्पायुषी लोगोंके उपयोगमें उतना नहीं आसक्ता है. इसवास्तै उस वृहद्धारीतसंहिता ग्रंथका साररूप यह लघुहारीतसंहिता ग्रंथ सर्व आधुनिक वैद्यलोगोंके उपयोगमें आवेगा. ऐसा समझकर हमनें इस ग्रंथको वेरीनिवासी पंडित रविदत्तशास्त्रीजीके द्वारा हिंदीभाषानुवाद बनवायकर और शास्त्रीद्वारा अत्यंत शुद्धकरवायकर छपवायके प्रसिद्ध किया है.—यह हारीतसंहिता ग्रंथ बहोतही उपकारक और स्वल्पहोकरभी सर्व वैद्योंको सब तरहके औषधज्ञान और रोगोंकी चिकित्सा करनेंमें अप्रतिम साह्यकारी होगा; इसमें कुछ संदेह नहीं. इस ग्रंथकी भाषा ऋषिभाषित होनेंसें कहां कहां अशुद्धसे शब्दप्रयोग दीखते हैं परंतु वे प्रयोग आर्ष समझकर वैसेके वैसेही रखदिये गये हैं. कारण वे प्रयोग शुद्धकरनेंमें ऋषिका तात्पर्य समझता नहीं है. इसवास्तै जैसेकी वैसेही जहांकहांके प्रयोग रखदिये गये है. और अन्यत्र अच्छी रीतिसें शुद्ध किया-गया है.–अस्तु–वैद्य महाशय लोग इस अपूर्व ग्रंथको अवश्य संग्रहमें रखकर रोगनिवारण द्वारा निर्मल कीर्तिको प्राप्त करेंगे.

आपका.

खेमराज श्रीकृष्णदास–"श्रीवेङ्कटेश्वर" छापखाना.
मुंबई.

# हारीतसंहिताविषयानुक्रमणिका॥

## विषयानुक्रमणिका.

## विषयानुक्रमणिका.

## विषयानुक्रमणिका.

॥ श्रीः ॥

# अथ हारीतसंहिता ।

## भाषाटीकासमेता ।

---

### प्रथमोऽध्यायः १

---

श्रीगणेशाय नमः ॥ श्रीमद्देवीपदद्वंद्वं प्रत्यूहव्यूहनाशनम् ॥
तन्नमामि नतिर्य्यस्य वितरत्युत्तमां मतिम्॥१॥शिवसहायपुत्रेण
रविदत्तेन धीमता॥हारीतसंहिताभाषा-टीका नूनं विरच्यते॥२॥

### ग्रंथकारमंगलाचरण.

नत्वा शिवं परमतत्त्वकलाधिरूढं ज्ञानामृतैकचटुलं परमात्मरूपम् ॥
रागादिरोगशमनं दमनं स्मरस्य शश्वत्क्षपाधिपधरं त्रिगुणात्मरूपम् ॥१॥

परमतत्व कलापै आरूढहुये और ज्ञानरूपी अमृतसें सुंदर और परमात्मरूपको धारण कियेहुये और रागआदि रोगोंको शांत करनेवाले और कामदेवको दग्ध करनेवाले और निरंतर चंद्रमाको मस्तकमें धारन करनेवाले और त्रिगुणात्मरूपवाले ऐसे महादेवजीको प्रणाम करकें यह हारीतसंहितानामक ग्रंथ करताहूं ॥ १ ॥

### आत्रेयहारीतसंवाद

हिमवदुत्तरे कूले सिद्धगन्धर्वसेविते ॥ शान्तमृगगणाकीर्णे नानापादप शोभिते ॥ २ ॥ तत्रस्थं तपसा युक्तं तरुणादित्यतेजसम् ॥ शुद्धस्फटिकवच्छुभ्रं भूतिभूषितविग्रहम् ॥ ३ ॥ जटाजूटाटवीमूले उषितं शुभ्रकुण्डलम् ॥ आत्रेयं वहुशिष्यैस्तु राजितं तपसान्वितम् ॥ ४ ॥ पप्रच्छ शिष्यो हारीतः सर्वज्ञानमिदं महत् ॥ ५ ॥

सिद्ध और गंधर्वोंसे सेवित किया और शांतस्वरूप मृगोंके समूहसे व्याप्त हुआ और अनेक प्रकारके वृक्षोंसे शोभितहुआ ऐसे हिमालयपर्वतके उत्तरकूलपै ॥ २ ॥ तरुण

सूर्यका तेजके समान तेजवाले और तपको करतेहुये और शुद्धहुये गिलोरी पत्थरके समान श्वेतरूपवाले और भूतिसे भूपितहुआ शरीरवाले और पूर्वोक्त जगहमें स्थित ॥ ३ ॥ और जटाजूटरूपी वनके मूलमें वसतेहुये और श्वेतकुंडलोंको धारणकिये और वहुतसे शिष्योंसे प्रकाशितहुये और तपस्वी ऐसे आत्रेयजी महाराजको ॥ ४ ॥ हारीत नामवाला शिष्य इस संपूर्ण महाज्ञानको पूछताभया ॥ ५ ॥

**हारीत उवाच ॥ भवन् ! गुणगणाधार ! आयुर्वेदविदां वर ! ॥ विनयादविनीतोऽहं पृच्छामि मुनिपुङ्गव ! ॥ ६ ॥ कथं रोगसमुत्पत्तिरुत्पन्नो ज्ञायते कथम् ॥ उपचारः प्रचारश्च कथं वा सिद्धिमिच्छति ॥ ७ ॥ एतत्सम्यक् परिज्ञानं कथयस्व महामुने ! ॥ एवं पृष्टो महाचार्य्यो हारीतेन महात्मना ॥ प्रत्युवाच ऋषिः पुत्रं प्रहस्योत्फुल्ललोचनः ॥ ८ ॥**

हारीत कहने लगा—हेभगवन् ! हेगुणोंके समूहके आधार ! हेआयुर्वेदके जाननेवालोंमें श्रेष्ठ हेमुनियोंमें उत्तम ! अविनीत मैं विनयसे पूछताहूं ॥ ६ ॥ कैसे रोगकी उत्पत्ति होतीहै ? और उत्पन्न हुआ रोग कैसे जाना जाता है ? और रोगकी चिकित्सा और पथ्य कैसे होताहै ? और वही रोग कैसे सिद्धिको प्राप्त होताहै ? ॥७॥ हेमहामुने ! इस परिज्ञानको अच्छीतरह कहो ऐसे महात्मा हारीतसे पूछेहुये महाचार्य आत्रेयजी हँसके और खिलेहुये नेत्रोंवाले होकै मुनि हारीतसे कहनेलगे ॥ ८ ॥

**आत्रेय उवाच ॥ शृणु पुत्र ! महाप्राज्ञ ! सर्वशास्त्रविशारद ! ॥ चिकित्साशास्त्रकुशल ! वैद्यविद्याविचक्षण ॥ ९ ॥ आयुर्वेदमपारन्तु लोकानां लक्षसंख्यया ॥ कथं तस्य परिज्ञानं कालेनाल्पेन पुत्रक ! ॥१०॥**

आत्रेयजी कहतेहै—हेपुत्र हेमहाप्राज्ञ हेसर्वशास्त्रोंमें कुशल हेचिकित्साशास्त्रमें कुशल हेवैद्योंकी विद्याके जाननेवाले ॥ ९ ॥ हेपुत्र ! आयुर्वेद अपार है और तिसके लक्षश्लोक है तिसका जानना मनुष्योंको थोडेकालकरके कैसे होसकाहै अर्थात् मुशकिलहैं ॥ १० ॥

**अल्पायुषोऽल्पवक्तारः स्वल्पशास्त्रविशारदाः ॥ अल्पावधारणे शक्ताः कलौ जाता इमे नराः ॥ ११ ॥ अल्पः कलियुगश्चायं नरोपद्रवकारणम् ॥ कथं पुत्र ! प्रवक्ष्यामि विस्तरेण तवागमम् ॥ १२ ॥**

अल्प आयुवाले और अल्प बोलनेवाले और स्वल्प अर्थात् थोडे शास्त्रको जाननेवाले और अल्प निश्चयवाले ऐसे ये मनुष्य कलियुगमें उपजेहैं ॥ ११ ॥ यह कलियुगभी अल्प-

रूप है परंतु मनुष्योंको उपद्रवोंका कारण है इसवास्ते हे पुत्र तेरेप्रति विस्तारसे वैद्यक शास्त्रको कैसे कहूं ॥ १२ ॥

यस्य श्रवणकालो यो याति चान्तश्च पुत्रक! ॥ तस्माच्चाल्पतरेणाऽपि वक्ष्यामि शृणु साम्प्रतम् ॥ १३ ॥ चतुर्विंशसहस्रैस्तु मयोक्ता चाद्यसंहिता ॥ तथा द्वादशसाहस्री द्वितीया संहिता मता ॥ १४ ॥ तृतीया षट्सहस्रैस्तु चतुर्थी त्रिभिरेव च ॥ १५ ॥ पञ्चमी दिक्पञ्चशतैः प्रोक्ताः पञ्चात्र संहिताः ॥ तस्माच्चाल्पतरेणापि वक्ष्यामि शृणु पुत्रक! ॥ १६ ॥

हे पुत्र! जिसको जो सुननेका समय है वह अंतको प्राप्त हो जाताहै तिसकारणसे अति थोडे करके तेरेको अब कहताहूं सुन ॥ १३ ॥ मैंने चौवीसहजार श्लोकोंसे युक्त प्रथम संहिता कही है और वैसेही बारहहजार श्लोकोंसे संयुक्त दूसरी संहिता कही है ॥१४॥ और वैसेही छःहजार श्लोकोंसे युक्त तीसरी संहिता कही है और तीनहजार श्लोकोंसे संयुक्त चौथी संहिता कही है ॥ १५ ॥ और डेढहजार अर्थात् पंदहरसौ श्लोकोंसे संयुक्त पांचमी संहिता कही है- ऐसे पांच संहिता मैंनें कहीहैं तिसकारणसे हे पुत्र! मैं संक्षेपसे कहूंगा तूं सुन ॥ १६ ॥

येन विज्ञानमात्रेण गदवेदविदो भवेत् ॥ किमत्र बहुनोक्तेन चाल्पसारे विशारद! ॥ १७ ॥ येन धर्मार्थसौख्यं च तद्धि कर्म समाचरेत् ॥ येन संजायते श्रेयो येन कीर्तिर्महत्सुखम् ॥ १८ ॥ तत्कर्म नितरां साध्यं जनानन्दविधायकम् ॥ १९ ॥

जिसके जानने मात्रसे आयुर्वेदको जाननेवाला मनुष्य हो जाताहै. हे विशारद! अल्पसारमें वहुत कहनेसे यहां क्या है ॥ १७ ॥ जिस कर्म्मसे धर्म–अर्थ–सुख–इन्होंकी प्राप्ति होवै तिसकर्म्मका आचरण करना और जिस कर्म्मसे कल्याण–कीर्ति–अतिसुख–ये होवैं ॥ १८ ॥ तिस कर्म्मको निरंतर करै यही कर्म्म मनुष्योंको आनंदका देनेवाला है ॥ १९ ॥

एकं शास्त्रं वैद्यमध्यात्मकं वा सौख्यं चैकं यत्सुखं वा तपो वा॥वन्द्यश्चैको भूपतिर्वा यतिर्वा एकं कर्म श्रेयसं वा यशो वा ॥२०॥ बहुतरमुपचारात् सारमाधारलोके जननमतिसुखानां वर्द्धनं श्रेयसां वा॥ विगतकलुषभावा चोज्ज्वला कीर्त्तिमूर्त्तिर्न खलु कुटिलतास्याः श्रूयते लोकवृन्दैः ॥ २१ ॥

एकही शास्त्र ठीक है, वैद्यक अथवा वेदांत—और सुखभी एकही ठीक है, भोग अथवा तप—वंदनाके योग्यभी एकही ठीक है, राजा अथवा संन्यासी—कर्मभी एकही ठीक है, कल्याण अथवा यश ॥ २० ॥ इस संसारमें चिकित्सा करनेसे बहुतसा सार प्राप्त होता है, वही सार अतिसुखोंको उपजाता है और कल्याणको बढाता है, और तिसीसे कलुष भावसे वर्जित और प्रकाशित ऐसी कीर्ति उत्पन्न होती है और इस कर्मकरनेवालेकी कीर्तिकी कुटिलता मनुष्योंके समूहोंनें कहींभी नहीं सुनीये है ॥ २१ ॥

**आयुर्वेदमिदं सम्यग् न देयं यस्य कस्यचित्॥२२॥ नाभक्तायाप्यशान्ताय न मूर्खाय न चाधमे॥शान्ते देयं न देयं स्यात् सर्वथा नाऽधमेऽधने॥२३॥**

अच्छी तरहसे यह आयुर्वेद ऐसे तैसे मनुष्यको नहींदेना ॥२२॥और जो भक्त नहींहो और जो क्रोधीहो और जो मूर्खहो और जो नीचहो तिसकेलिये कभीभी नहीं देना शांतिवाले पुरुषको देना नीच और धनसे रहितको आयुर्वेद नहीं देना ॥ २३ ॥

**धर्मिष्ठो कुहनीविवर्जितमनाः शान्तः शुचिः शुद्धधीर्धीरोऽभीरुर्विवेकसारहृदयो विद्याविलासोज्ज्वलः॥ प्राज्ञो रोगगणप्रचारनिपुणोऽलुब्धः सदा तोषधृगित्थं सर्वगुणाकरो नृपजनैः पूज्यः सदा रोगवित् ॥ २४ ॥**

अत्यंत धर्मको माननेवालाहो और कपटसे वर्जित मनवालाहो और शांतहो पवित्रहो शुद्ध बुद्धिवालाहो धीरहो डरनेवाला नहींहो और विवेकके सारसे संयुक्त हृदयवालाहो और विद्याके आनंदसे प्रकाशितहो पंडितहो रोगोंके समूहके प्रचारमें निपुणहो लोभी नहींहो और सबकालमें संतोषको धारनेवालाहो ऐसे सबगुणोंका खजानारूपी वैद्यको राजालोगोंनें सब कालमें पूजना चाहिये ॥ २४ ॥

**दृष्ट्वा यथा मृगपतिं गजयूथनाथः संशुष्कमानमदबिन्दुकपोलधारः ॥ त्यक्त्वा वनं व्रजति चाकुलमानसेन दृष्ट्वा तथा गदगजो भिषजं प्रयाति ॥२५॥यद्वत्तमोवृतमिदं भुवनं मयूखैः प्राकाश्यमाशु कुरुते सकलं रविस्तु॥ तद्वत्सुवैद्य उपलभ्य रुजोतिनाशं शीघ्रं करोति गदिनं गदमुक्तभारम्॥२६ ॥**

जैसे सिंहको देखकै हस्तियोंके समूहके स्वामीकी मदबिंदुओंकी धारा गंडस्थलमेंही सूख जातीहै और वह हाथी उस वनको त्याग व्याकुल मन करके भागताहै तैसे वैद्यको देखकर रोगराज गमन करताहै ॥ २५ ॥ जैसे अंधेरेसे संयुक्तहुआ स्थानमें सूर्य किरनोंसे शीघ्र प्रकाशको करताहै तैसेही कुशलवैद्य रोगके नाशको प्राप्तहो रोगीको रोगरूपी भारसे अल्प निर्भ्देताहै ॥ २६ ॥

लुब्धः क्रूरः शठजठरको मद्यपश्चालसश्चाधीरो भीरुर्विकलहृदयो हीनकर्मार्थमन्दः ॥ शास्त्रज्ञातोऽप्यविदितगदज्ञानपाखण्डखण्डो वर्ज्यो वैद्यः प्रबलमतिभिर्भूमिपैर्वा सुदूरात् ॥ २७ ॥

लोभीहो क्रोधीहो शठहो कठोरहो मदिराको पीनेवालाहो आलस्यवालाहो धीरनहींहो डरनेवालाहो विकलहुये हृदयवालाहो हीनकर्म्मवालाहो प्रयोजनमें मंदहो रोगको नहीं पिछाननेवालाहो ऐसा वैद्य जो शास्त्रको जाननेवालाभी हो तबभी अच्छी बुद्धिवाले राजानें दूरसे वर्ज्जना चाहिये ॥ २७ ॥

## वैद्यशास्त्रपठनविधि.

अद्रुतं चाप्यशङ्कञ्च नात्युच्चं नीचमेव च ॥ यः पठेच्छास्त्रमित्थञ्च तस्य शास्त्रातिर्दृश्यते ॥ २८ ॥ चर्वणं गिलनं चापि कम्पितं श्वसितं तथा॥ नीचोच्चं चैव गम्भीरं वर्जयेत्पाठकेन तु ॥ २९ ॥

अद्रुत प्रकार-अशुद्ध-अतिऊंचा प्रकार-नीचा प्रकार-इन्होंसे रहित साधारण प्रकारसे जो शास्त्रको पढै तिसको शास्त्रकी प्राप्ति होती है ॥ २८ ॥ चावना, निगिलना, कांपना, अतिश्वास लेना, नीचापना, ऊंचापना, गंभीरपना, इन सबोंको पठनकरनेवाला वर्ज्जै ॥ २९ ॥

अनध्याये न शास्त्रस्य नोत्सवे यज्ञकर्मसु ॥ जातके सूतके चाथ पठनं न विधीयते ॥ ३० ॥ चतुर्दश्यष्टमीदर्शप्रतिपत्पूर्णिमास्तथा ॥ वर्ज्याः पञ्च इमाः पाठे मुनिभिः परिकीर्त्तिताः ॥ ३१ ॥ अकाले दुर्दिने गर्जे दिग्दाहे भूमिकम्पने ॥ शास्त्रपाठस्तथा वर्ज्यो ग्रहणे चन्द्रसूर्य्ययोः॥३२॥ द्वादशैते अनध्यायाः प्रोक्ताः शृणुष्व पुत्रक! ॥ गुरुपीडासमुत्पन्ने नृपे संपीडितेऽथवा ॥३३॥ आहवे जीवसम्पाते प्रदोषे वाऽथवा पुनः॥राष्ट्रपीडा समुत्पन्ने न कुर्याच्छास्त्रपाठनम् ॥३४॥ एतैस्तु पठितं शास्त्रं न स्वार्थे सिद्धिसाधकम् ॥ न श्रेयसे न माङ्गल्ये नोपकारे सुखावहम् ॥ ३५ ॥

अनध्याय, उत्सव, यज्ञकर्म, जन्मको सूतक, मृतसूतक, इन्होंमें शास्त्रको नहीं पढना॥३०॥ चतुर्दशी,-अष्टमी,-अमावास्या,-प्रतिपदा,-पूर्णिमा ये पाचोंतिथि मुनिजनोंनें पढनेमें वर्ज्जी हैं ॥ ३१ ॥ अकाल,-दुर्दिन, गर्जना, दिग्दाह,-भूमिकंप अर्थात् भूचाल,-चंद्रमाका ग्रहण,-सूर्यका ग्रहण,—इन्होंमें शास्त्रका पढना वर्जित है ॥३२॥ हे पुत्र ! बारह अनध्याय कहे हैं तू सुन गुरुको पीडा उपजै; राजाको पीडा उपजे,॥३३॥युद्ध, जीवोंका मरना, प्रदोष, देशको पीड़ा उपजै ऐसे छः ये और छः अकाल आदि कहचुके इन बारहोंमें शास्त्रका पाठ करै नहीं

॥ ३४ ॥ इन अनध्यायोंमें पठित किया शास्त्र आपने प्रयोजनमें सिद्धिको नहीं देता और कल्याणको नहीं करता और मंगलको नहीं देता और उपकारमें सुखको नहीं देता ॥ ३५ ॥

एवं ज्ञात्वा पठति निपुणो वैद्यविद्यानिधानं श्रेयस्तस्य प्रतिदिनमसौ वाञ्छितार्थं प्रपद्येत् ॥ कीर्तिः सौख्यं भवति नितरां तस्य लोकप्रशंसा पूज्यो राज्ञां सततमपि वै जायते स्वार्थसिद्धिः॥३६॥ इति आत्रेयभाषिते हारीतोत्तरे वैद्यगुणदोषशास्त्रपठनविधिर्नाम प्रथमोऽध्यायः ॥ १ ॥

ऐसे जानकै जो कुशल वैद्य शास्त्रको पठित करता है तिसको कल्याण मिलता है, और नित्यप्रति मनोवांछित प्रयोजन प्राप्त होता है और तिस वैद्यको नित्यप्रति सुखहोता है संसारमें कीर्ति और प्रशंसा प्राप्त होती है और अपने प्रयोजनकी सिद्धि होती है और ऐसे पठन करनेवाला पंडित राजा लोगों करके निरंतर पूजनेके योग्य है ॥ ३६॥ इति वेरीनिवासि बुधशिवसहायतनयवैद्यरविदत्तशास्त्रि-अनुवादित-हारीतसंहिताभाषायां प्रथमस्थाने वैद्यगुणदोषशास्त्रपाठनविधिर्नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः । २

### चिकित्सासंग्रह.

आत्रेय उवाच ॥ अथातः संप्रवक्ष्यामि शास्त्रस्यास्य समुच्चयम् ॥ आयुर्वेदसमुत्पत्तिं सर्वशास्त्रार्थसंग्रहम् ॥ १ ॥

आत्रेयजी कहते हैं—इस पहले अध्यायको कहकै अब दूसरे अध्यायमें इस शास्त्रके समुच्चयको कहताहूं और आयुर्वेदकी समुत्पत्तिको और सब शास्त्रोंके अर्थका संग्रह करताहूं ॥ १ ॥

अष्टौ चात्र चिकित्साश्च तिष्ठन्ति भिषजां वर ! ॥ ता वक्ष्यामि समासेन चिकित्साश्च पृथक् पृथक् ॥ २ ॥

हे वैद्योंमें श्रेष्ठ इसग्रंथमें आठ प्रकारकी चिकित्सा स्थित हैं तिन्होंको और पृथक् पृथक् चिकित्साको कहूंगा ॥ २ ॥

संग्रहस्य प्रवक्ष्यामि प्रथमं चान्नपानकम् ॥ अरिष्टं च द्वितीयं स्यात्तृतीयं च चि त्सतम् ॥ ३ ॥कल्पं चतुर्थकं प्रोक्तं सूत्रस्थानन्तु पञ्चमम् ॥

षष्ठं चात्र शरीरं स्यादित्यायुर्वेदकारकाः ॥४॥ शल्यशालाक्यकायाश्च तथा बालचिकित्सितम् ॥ अगदं विषतन्त्रश्च भूतविद्या रसायनम् ॥ वाजीकरणमेवेति चिकित्सा चाष्टधा स्मृता ॥ ५॥ वैद्यागमेषु सर्वेषु प्रोक्तं श्रेष्ठमिदं महत् ॥ तथा चाष्टौ चिकित्सायां वदन्ति वेदविज्जनाः ॥ ६ ॥

और संग्रहके अन्नपाननामक प्रथमस्थानको कहूंगा और अरिष्ट नामवाला दूसरा स्थान है और चिकित्सित नामवाला तीसरा स्थान है ॥ ३ ॥ कल्प नामवाला चौथा स्थान है सूत्रस्थान पंचिमा है शारीरस्थान छठा है ऐसा आयुर्वेदको करनेवाले कहते हैं ॥ ४ ॥ शल्य–शालाक्य–कायचिकित्सा–बालचिकित्सित–अगद–विषतंत्र–भूतविद्या–रसायन-वाजीकरण–ऐसे चिकित्सा आठ प्रकारसे कही है ॥ ५ ॥ वैद्योंके सब ग्रंथोंमें यह उत्तम और बडा ग्रंथ माना है ऐसे वेदको जाननेवाले जन चिकित्सामें आठ प्रकारको कहते है ॥ ६ ॥

यन्त्रशस्त्राग्निक्षाराणामौषधं पथ्य एव च ॥
स्वेदनं मर्दनं चैव कथितान्युपकारिणाम् ॥७॥

यंत्रकर्म, शस्त्रकर्म, अग्निकर्म, औषध, पथ्य, स्वेदन, मर्दन, ये सब उपकारियोंकेलिये कहे है ॥ ७ ॥

एतैर्वैद्यकशास्त्रस्य सारो भवति सर्वतः ॥ ८ ॥

इन्हींसे वैद्यकशास्त्रका सार सब जगहसे यंत्रकर्म–शस्त्रकर्म–बंधकर्म–इन्होंके द्वारा होता है जिस करके वैद्य उद्धार करता है ॥ ८ ॥

## अथ शल्यतन्त्रम्

यन्त्रशस्त्रार्थबन्धैस्तु येन चोद्ध्रियते भिषक् ॥ तच्च शल्योद्धरणकं प्रोच्यते वैद्यकागमे ॥ नाराचवालवल्लीभिर्भल्लैः कुन्तैश्च तोमरैः ॥९॥ शिलाग्निभिन्नगात्रस्य तत्र साध्यादिशल्यकम् ॥ १० ॥ तत्प्रतीकारकरणं तच्च शाल्यचिकित्सितम् ॥ तथा बाणसमुद्दिष्टतृणपांशुकृमीकचम् ॥ रक्तवस्तु तथा पेशी पूयं शेषान्तरेऽपि यत् ॥ ११ ॥ तच्छल्यमिति जानीयाल्लोष्टकाष्ठविभिन्नकम् ॥ १२ ॥

अथ शल्यतंत्रका लक्षण–यह वैद्यकशास्त्रमें शल्योद्धरण अर्थात् शल्यको निकासना कहते हैं जो बाण केश वल्लि–भाला–कुंतशस्त्र–तोमरशस्त्र–इन्हों करके ॥९ ॥ पत्थर और अग्निसे भिन्नहुआ शरीरवाले मनुष्यके प्राप्तहुआ जो शल्य जिसको निकासनेका उपाय

करना यह शाल्यचिकित्सित कहाता है ॥ १० ॥ और व्रण अर्थात् घावके प्रकरणमें कहाहुआ तृण—फांस—आदि—लालचीज—मांसकी पेशी—राद—और शेष अंतरमें जो कछु हो ॥११॥ और लोहा लकडी आदि जो है इन सबोंको शल्य जानना॥१२॥यह शल्यतंत्र है—

## अथ शालाक्यम्

शिरोरोगा नेत्ररोगाः कर्णरोगा विशेषतः ॥भ्रूकण्ठशङ्खमन्यासु ये रोगाः सम्भवन्ति हि ॥ १३ ॥ तेषां प्रतीकारकर्म नासावर्त्यञ्जनानि च ॥ अभ्यङ्गं मुखगण्डूषक्रिया शालाक्यनामिका ॥ १४ ॥ इति शालाक्यं नाम ॥

अथ शालाक्यतंत्रका लक्षण—शिरके रोग, नेत्रोंके रोग, कानके रोग, और विशेष करके भृकुटी—कनपटी—कंधा—इन्होंमें जो रोग उपजै ॥ १३ ॥ तिन्होंको दूर करनेके लिये जो नस्यकर्म—अंजन—अभ्यंग अर्थात् मालिस—गंडूष अर्थात् कुल्ले करनां आदि क्रिया—ये सब शालाक्य कहाते है ॥ १४ ॥

## अथ कायचिकित्सा

काषायचूर्णगुटिका पञ्चानां शोधनानि च॥कोष्ठामयानां शमनी क्रिया कायचिकित्सितम् ॥ १५ ॥

अथ कायचिकित्साका लक्षण—काढा चूरन गोली स्वेदन स्नेहन वमन, विरेचन वस्तिकर्म—ये सब और कोष्ठके रोगोंको शांत करनेवाली क्रिया कायचिकित्सित कहाती है॥१५॥

## अथ अगदं नाम

गुदामयं वस्तिरुजं शमनं वस्तिरूहकम् ॥ आस्थापनानुवासंतु अगदं नाम एव च ॥ १६ ॥

अथ अगदतंत्र लक्षण—गुदाके और मूत्राशयके रोगको शांत करना निरूहवस्ति—आस्थापन वस्ति—अनुवासनवस्ति ये सब अगदतंत्रनामसे विख्यात है ॥१६॥

## अथ बालचिकित्सा

गर्भोपक्रमविज्ञानं सूतिकोपक्रमस्तथा ॥ बालानां रोगशमनं क्रिया बालचिकित्सितम् ॥ १७ ॥

अथ बालचिकित्सितकालक्षण—गर्भकी और सूतिकाकी चिकित्साका ज्ञान और बालकोंके रोगोंको शांत करनेवाली क्रिया बालचिकित्सित कहाती है ॥ १७ ॥

अथ विषतन्त्रं नाम ॥

सर्पवृश्चिकलूतानां विषोपशमनी तु या ॥
सा क्रिया विषतन्त्रश्च नाम प्रोक्ता मनीषिभिः ॥ १८ ॥

सांप,–बीछू, मकडी, इन्होंके विषको शांत करनेवाली क्रिया विषतंत्र कहाती है ऐसे बुद्धिमानोंनें कहा है ॥ १८ ॥

अथ भूतविद्या नाम ॥

ग्रहभूतपिशाचाश्च शाकिनीडाकिनीग्रहाः ॥
एतेषां निग्रहः सम्यग्भूतविद्या निगद्यते ॥ १९ ॥

अथ भूतविद्याका लक्षण–ग्रह–भूत–पिशाच–डाकिनी–शाकिनी–ग्रह–इन्होंको अच्छी तरह निग्रह करना भूतविद्या कहाती है ॥ १९ ॥

अथ वाजीकरणम् ॥

क्षीणानां चाल्पवीर्य्याणां बृंहणं बलवर्द्धनम् ॥
तर्पणं समधातूनां वाजीकरणमुच्यते ॥ २० ॥

अथ वाजीकरणका लक्षण–क्षीणहुये और अल्प वीर्यवाले मनुष्योको पुष्ट करना और बलको बढाना और समान धातुवालोंको तृप्त करना–यह वाजीकरण कहाता है॥२०॥

अथ रसायनतन्त्रम् ॥

देहस्येन्द्रियदन्तानां दृढीकरणमेव च ॥ वलीपलितखालित्यवर्जनेऽपि च या क्रिया ॥ २१ ॥ पूर्ववैद्यप्रणीतं हि तद्रसायनमुच्यते ॥ २२ ॥

अथ रसायनका लक्षण–शरीर, इंद्रिय, दंत, इन्होंको दृढ करना और शरीरकी वली, वालोंकी सफेदाई, वालोंका उडजाना, इन्होंक वर्जनेकी जो क्रिया हो ॥ २१ ॥ और पहले धन्वंतरी आदि वैद्योंकी रची हुई हो तिसको रसायन कहते हैं ॥ २२ ॥

अथ उपाङ्गचिकित्सा ॥

छिन्नं भिन्नं तथा भग्नं क्षतं पिच्चितमेव च ॥
तेषां दग्धप्रतीकारः प्रोक्तश्चोपाङ्गसंज्ञकः ॥ २३ ॥

अथ उपांगचिकित्साका लक्षण–छिन्न अर्थात् छेदितहुआ–भिन्न अर्थात् विदारितहुआ–भग्न अर्थात् टूटा हुआ–क्षत अर्थात् घाव आदि–पिच्चित अर्थात् पिचलित हुआ–दग्ध अर्थात् जलाहुआ–इन्होंकी चिकित्साको उपांगसंज्ञक कहते है ॥ २३ ॥

इति वैद्यकसर्वस्वं चिकित्सागमभूषणम् ॥
पठित्वा तु सुधीः सम्यक् प्राप्स्यते सिद्धिसङ्गमम् ॥२४॥
इति वैद्यकसर्वस्वे चिकित्सासंग्रहो नाम द्वितीयोऽध्यायः॥ २ ॥

चिकित्सारूपी शास्त्रसे भूषितहुआ वैद्यकसर्वस्व समाप्त हुआ इसको वैद्य अच्छी तरह पढके सिद्धिको प्राप्त होता है ॥ २४ ॥ इति वेरीनिवासिवुधशिवसहायसूनुवैद्यरविदत्त शास्त्रिअनुवादितहारीतसंहिताभाषायां प्रथमस्थाने चिकित्सासंग्रहो नाम द्वितीयोऽध्यायः॥२॥

## तृतीयोऽध्यायः॥ ३

---

### वैद्यशिक्षाविधानम् ॥

अथ वक्ष्यामि रोगाणामुपचारक्रमं तथा ॥
जानाति यो बुधः सम्यक् पूज्यते नृपसत्तमैः ॥ १ ॥

अथ रोगोंके चिकित्साक्रमके लक्षण–इसके अनंतर रोगोंकी चिकित्साके क्रमको कहूंगा जो पंडित इसको अच्छी तरह जानता है वह राजालोगोंसे पूजित होता है ॥ १ ॥

### उपचार करनेकी योग्यता

ज्ञात्वा रोगसमुत्पत्तिं रोगाणामप्युपक्रमम् ॥
ज्ञात्वा प्रतिक्रियां वैद्यः प्रतिकुर्य्याद्यथोचितम् ॥ २ ॥

कुशलवैद्य रोगकी उत्पत्तिको और रोगोंके पथ्य आदिको और चिकित्साको जानकै पश्चात् यथोचितको करै ॥ २ ॥

### देशकालआदिका ज्ञान

देशं कालं वयो वह्निं सात्म्यप्रकृतिभेषजम् ॥
देहं सत्वं बलं व्याधेर्दृष्ट्वा कर्म समाचरेत् ॥ ३ ॥

देश, समय, अवस्था, जठराग्नि प्रकृतिके योग्य औषध, देह, सत्व, रोगका बल इन्हों-को देखकै पीछे चिकित्साका आरंभ करै ॥ ३ ॥

### उपचार करनेका फल

धर्मार्थकामलाभः स्यात् सम्यगातुरसेवनात् ॥
यदा नाचरतस्तस्य विनाशश्चात्मनस्तदा ॥ ४ ॥

रोगीकी अच्छी तरह चिकित्सा करनेसे धर्म, अर्थ, काम, इन्होंकी प्राप्ति होती है जो वैद्य रोगीकी चिकित्सा नहीं करता तिस वैद्यके शरीरका नाश होजाताहै ॥ ४ ॥

वैद्यका वैद्यत्व

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ॥
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ५ ॥

रोगके तत्त्वको जानना—पीड़ाका नाश करना—वैद्यका यही वैद्यपना है और आयुका मालिक वैद्य नहीं है—अथवा इतनाहीं नहीं है, किंतु आयुका मालिक वैद्यही है ॥ ५ ॥

दोप्रकारका उपचारउपक्रम

द्विविधोपक्रमश्चैव शमनः कोपनो रुजाम् ॥
तथैव ज्ञात्वा विबुधः क्रियां कुर्याद्विचक्षणः ॥ ६ ॥

चिकित्सा २ प्रकारकी है एक शमन दूसरी कोपन सो रोगको जानके कुशलवैद्य क्रियाको करै ॥ ६ ॥

दो प्रकारके वैद्य ॥

वैद्योऽपि द्विविधो ज्ञेयो विकारेङ्गितरोगयोः ॥ उपचारापचारज्ञो द्विविधः प्रोच्यते भिषक् ॥ ७ ॥ उपचारेण शमनमपचारेण कोपनम् ॥ एवं विज्ञाय सद्वैद्यः कुर्य्यात् संशमनक्रियाम् ॥ ८ ॥

वैद्यभी २ प्रकारका है रोगके उपचार अर्थात् चिकित्साको जाननेवाला और रोगके अपचार अर्थात् दुष्परिणामको नहीं जाननेवाला ऐसे २ प्रकारका वैद्य कहा है॥ ७ ॥ उपचारसे रोगकी शांति होती है अपचारसे रोगका कोप होता है ऐसे कुशलवैद्य जानके संशमन अर्थात् रोगको शांत करनेवाली क्रियाको करै ॥ ८ ॥

व्याधीके साध्यअसाध्यविचार ॥

साध्योऽसाध्यश्च याप्यश्च कृच्छ्रसाध्यस्तथैव च ॥ व्याधिश्चतुर्विधः प्रोक्तः सद्वैद्यैः शास्त्रकोविदैः ॥ ९ ॥ उपचारेण साध्या ये रोगा गच्छन्ति याप्यताम् ॥ याप्यास्त्वसाध्यतां यान्ति साध्यकष्टेन पुत्रक ! ॥ १० ॥ सम्भवन्ति महारोगाः कष्टसाध्या म्रियन्ति वै ॥ एवं चतुर्विधो व्याधिर्ज्ञात्वा कर्म समाचरेत् ॥ ११ ॥

साध्य—असाध्य—याप्य—कष्टसाध्य इन भेदोंसे रोगभी ४ प्रकारका कुशल वैद्योंने कहा है ॥ ९ ॥ हे पुत्र ! चिकित्साके नहीं करनेसे साध्यरोग कष्टसाध्यपनेको प्राप्त होते हैं और कष्टसाध्य रोग असाध्यपनेको प्राप्त होते हैं साध्यके कष्ट करकै ॥१०॥ महारोग उपजते हैं

और कष्टसाध्य रोगवाले मरजाते हैं ऐसे व्याधि च्यारप्रकारकी है और तिसको जानकै कर्म्म-का आचरण करै ॥ ११ ॥

उपचारका फल ॥

उपचारकृता दोषाः कृच्छ्रास्ते यान्ति याप्यताम् ॥ याप्याः साध्यत्व मायान्ति कष्टसाध्यं भवेद्ध्रुवम् ॥ १२ ॥ सुखसाध्यः सुखी शीघ्रं स्यात् सुधीभिरुपक्रमैः ॥ साध्यासाध्यपरिज्ञानं ज्ञात्वोपक्रमणं तथा ॥ १३ ॥

चिकित्साके करनेसे कष्टसाध्यरोग याप्यपनेको प्राप्तहोते हैं और याप्यरोग साध्यपनेको प्राप्त होते हैं ऐसे कष्टसाध्यकी व्यंवस्था है ॥ १२ ॥ वैद्योंकी चिकित्सासे रोगी शीघ्र सुखसाध्य होजाता है ऐसे साध्य और असाध्यके परिज्ञानको जानकै पीछे चिकि-त्साको करै ॥ १३ ॥

दोषके शेष रहजानेसें हानि ॥

साध्यंगते यदा रोगे दोषशेषं न धारयेत् ॥ दोषशेषेऽपि कष्टं स्यात्त स्मायत्नान्निकृन्तयेत् ॥ १४ ॥ यथा हि कालदुष्टः स्यात् यथा सूक्ष्मोऽग्नितः कणः ॥ स्वल्पस्तद्वत् क्रियाप्राप्तो गदो घोरतरो भवेत् ॥ १५ ॥ तथा दोषस्य शेषे तु शमनं याति चाल्पशः ॥ दैवाद्यद्दुष्टतां याति यथाग्निः कुपितो भृशम् ॥ १६ ॥

जब साध्य रोग होवै तब वातआदि दोषके शेषको नहीं धारण करना क्योंकि दोषको बाकीरहनेमें कष्टहो जाता है तिसवास्ते दोषको नाशितकरै ॥ १४ ॥ जैसें काल दुष्ट होजाता है जैसे अग्निका सूक्ष्म किनका बढजाताहै तैसे क्रियाको नहीं प्राप्तहुआ स्वल्पभी रोग अतिघोर होजाता है ॥ १५ ॥ दोषके शेषमें अतिअल्परोग शांत होजाता है परंतु दैवसे फिर दूषित होजाता है जैसे अतिकुपितहुआ अग्नि ॥ १६ ॥

अपथ्यसें हानि ॥

यथा काष्ठचयाद्दूरं प्राप्य घोरतरोऽग्निकः॥तथा पथ्यस्य संयोगाद् भवेद् घोरतरो गदः ॥ १७ ॥ कषायैश्च फलैश्चूर्णैः पिण्डलेहानुवासनैः ॥ सर्वाः क्रिया भृशं व्यर्था न शमं याति चामयः ॥ १८ ॥

जैसे काष्ठका समूहसे दूर प्राप्तहुआभी अग्नि अतिघोररूप होजाताहै तैसे अपथ्यके संयोगसे रोगभी अतिघोररूप होजाता है ॥ १७ ॥ काढा-फल-चूरन-गोली-चटणी-

अनुवासन वस्तिकर्म—इन्हों करके सब क्रियां व्यर्थ होजावैं और रोग शांत नहीं होवै ॥ १८ ॥

एवं ज्ञात्वा सदा वैद्यै रोगशान्तिककारणम् ॥
कर्त्तव्यमतियोगेन येन रोगः प्रशाम्यति ॥ १९ ॥

ऐसे जानकै सब कालमें वैद्योंनें रोगकी शांतिको करनेवाली क्रिया अतियोगसे अर्थात् पूर्वोक्तक्रिया विशेष करकै करनी चाहिये जिस्से रोग शांत होजावै ॥ १९ ॥

लङ्घनकी योग्यता ॥

ज्ञात्वा दोषबलं धीमान् लङ्घनानि समाचरेत् ॥
दोषे सति न दोषाय लङ्घनानि बहून्यपि ॥ २० ॥

वैद्य दोषके बलको जान लंघनोंका आचरण करावै क्योंकि दोषके होनेसे बहुतसेभी है लंघन दोषको करनेवाले नहीं होतेहै ॥ २० ॥

जठराग्निका कर्म ॥

पचेत् प्रथममाहारं दोषानाहारसंक्षये ॥
दोषक्षयेऽनलो धातून् प्राणान् धातुक्षये सति ॥ २१ ॥

जठराग्नि प्रथम भोजनको पकाता है और भोजनके नाश होनेमें वातआदि दोषोंको पकाता है और दोषोंके क्षय होनेमें धातुओंको पकाता है और धातुओंके क्षय होनेमें प्राणोंको पकाता है ॥ २१ ॥

सामनिराम व्याधिका उपक्रम ॥

ज्ञात्वा बलाबलं व्याधेः सामन्निराममेव च ॥
तदा सामे पाचनं स्यान्निरामे पथ्यसंक्रमः॥ २२ ॥

रोगके बल और अबलको जानके और साम तथा निरामरूप रोगको जानके पीछे साम अर्थात् आमसे संयुक्तहुये रोगमें लंघनकरावै और निराम अर्थात् आमसे रहितहुये रोगमें पथ्यको दिवावै॥२२॥

वैद्यकी योग्यता ॥

सामं निरामं सुखसाध्यमेव सम्यग् रुजश्च परिलक्ष्य रुजो विनाशम्॥
एतद्भवेत् सकलवैद्यकशास्त्रसारं नैवायुषश्च बलदानकरो हि वैद्यः ॥२३॥

साम—निराम—सुखसाध्य—इसप्रकारसे रोगको अच्छी तरह देख और रोगके नाशको देख विचारै सकल वैद्यकशास्त्रका सार यह है और आयुके बलको देनेवाला वैद्य नहीं होता॥२३॥

नो वैद्यो मनुजस्य सौख्यमथवा दुःखञ्च दातुं क्षमो जन्तोः कर्मविपाक एव भुवने सौख्याय दुःखाय च ॥ तस्मान्मानवदुःखकारणरुजां नाशस्य चात्र क्षमो वैद्यो बुद्धिनिधानधाम चतुरो नाम्नैव वैद्योऽपरः ॥२४॥ सम्यग् रुजां परिज्ञानं ज्ञात्वा दोषविनिग्रहम् ॥ प्रत्याख्येयश्च यः साध्यं जानाति स भवेद् भिषक् ॥ २५ ॥

मनुष्यको सुख अथवा दुःख देनेको वैद्य समर्थ नहीं है किं तु संसारमें सुख और दुःखको देनेवाला कर्मोंका विपाक है तिस कारणसे मनुष्यको दुःख करनेवाले रोगोंको नाशनेके लिये वैद्य समर्थ है और वैद्य बुद्धिभांडारका घरहै. चतुरहै और इससें विपरीत जो दूसरा वैद्यहो वह नामसेंही वैद्यहै॥२४॥जो रोगोंको अच्छी तरह जानकै और दोषोंके निग्रहको जान साध्य और असाध्य रोगीको जानता है तिसको वैद्य कहते है ॥ २५ ॥

## उपचार करनेयोग्य मनुष्य ॥

तपस्वी च ब्राह्मणश्च स्त्रियो वा बालकस्तथा ॥ दीनो वा दुर्बलो वापि प्राज्ञो वा पण्डितस्तथा ॥ २६ ॥ महात्मा श्रोत्रियः साधुरनाथो बन्धुवर्जितः ॥ एतान् व्याधिविनिग्रस्तान् प्रतिकुर्य्याद्विशेषतः ॥ २७ ॥

तपस्वी–ब्राह्मण–स्त्री–बालक–दीन–दुर्बल–बुद्धिमान्–पंडित–॥ २६ ॥ महात्मा–वेदपाठी–साधु–अनाथ–बंधुओंसे रहित–ऐसे रोगी हो जावै तो विशेष करकै वैद्य शीघ्र चिकित्सा करै ॥ २७ ॥

## उपचारसें धनलेनेयोग्य मनुष्य ॥

राजा च सुधनी चैव मण्डलीको बलाधिपः ॥
उपचार्य्योऽर्थसिद्धिः स्याद्वित्तं ग्राह्यं भयं न च ॥ २८ ॥

राजा–धनवाला साहुकार-छोटा राजा ठाकुर–सेनाका स्वामी–इन्होंकी चिकित्सा करनेमें वैद्यको द्रव्य लेना चाहिये और वैद्य भयको नहींकरै ॥२८ ॥

## यश मिलनेयोग्य मनुष्य ॥

मध्यमा वणिजां पन्तिः पुरोधा ब्राह्मणादयः॥ भट्टो वा गणिकाश्चण्यश्चिकित्स्यास्तु विशेषतः ॥ रोगग्रस्तेषु चैतेषु चिकित्सा कीर्त्तिकारिणी॥२९॥

व्यवहार करनेवाले-ब्राह्मण आदि पुरोहित-कवीश्वर-कत्थक अथवा ज्योतिषी–इन्होंकी चिकित्सा विशेष करकै करै क्योंकि इन्होंकी करीहुई चिकित्सा कीर्तिको करती है॥२९॥

चिकित्सा करनेको अयोग्य मनुष्य ॥

व्याधश्चौरस्तथा म्लेच्छो वह्निदो मत्स्यवन्धकः ॥ ३० ॥ वहुद्वेषो ग्रामकूटो बन्धको मांसविक्रयी ॥ एतेषां व्याधिग्रस्तानां नैव कुर्य्यात् प्रतिक्रियाम् ॥ ३१ ॥ एतेभ्यः स्वार्थसिद्धिर्नोपकारो हितमङ्गलम् ॥ तेषां जीवाप्तसंजातो वैद्यो भवति दोषभाक् ॥ ३२ ॥

और कसाई-चोर-म्लेच्छ-अग्निलगानेवाला—मछलियोंको वीधनेवाला ॥ ३० ॥ बहुतोंका वैरी—गाममें चुगली करनेवाला मांसको बेचनेवाला—इन्होंके जो रोग उपजै तो वैद्य चिकित्सा नहींकरै ॥ ३१ ॥ क्योंकि इन्हेंांसे स्वार्थकी सिद्धि नहीं है न उपकार है और कल्याणभी नहीं है और मंगलभी नहीं है तिन्होंको जीवदान देनेसे वैद्य दोषका भागी होजाता है॥३२॥

एवं ज्ञात्वा तु सद्वैद्यः कुर्य्यादथ प्रतिक्रियाम् ॥
धर्मार्थकामसम्पत्तिःकीर्तिर्लोके प्रवर्त्तते ॥ ३३ ॥

ऐसे जानकै पीछे कुशल वैद्य चिकित्साको करै चिकित्सासे धर्म—अर्थ—काम—इन्होंकी प्राप्ति और लोकमें कीर्ति प्रवृत्त होती है ॥ ३३ ॥

वैद्यकर्तव्यका उपसंहार ॥

इति वहुविधियुक्तो वैद्यविद्याविचारः क्षणमपि हृदये यो धारणं संकरोति ॥ स भवति गदसंघस्याथ विध्वंसशक्तो विमलविदितकीर्त्तिः पूज्यमानो नरेन्द्रैः ॥ ३४ ॥ इति आत्रेयभाषिते हारीतोत्तरे वैद्यशिक्षाविधानो नाम तृतीयोऽध्यायः ॥ ३ ॥

ऐसे बहुतसी विधिसे युक्त और वैद्यक विद्याको विचारनेवाला ऐसा वैद्य एक क्षणभरभी अपने हृदयमें धाराणाको करै वह वैद्य रोगके समूहको नाशनेमें समर्थ है और स्वच्छ तथा विख्यात कीर्तिवाला आर राजा लोगोंसे पूज्यमान हुआ वैद्य प्रसिद्ध होता है ॥ ३४॥
इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्रिअनुवादितहारीतसंहिताभाषायां प्रथमस्थाने वैद्यशिक्षाविधानो नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४

अथदेशकालबलाबलम् ॥

इदानीं संप्रवक्ष्यामि देशकालबलाबलम् ॥
सात्म्यं प्रकृतिर्देहश्च तथाग्नीनां विशेषणम् ॥ १

सत्म्यां ५. १८ वशमें है और

अब देश—काल-बल-अबल-सात्म्य-प्रकृति-देह-अग्निकी विशेषता-इन्होंको कहताहूं ॥१॥

देशके भेद

देशस्तु त्रिविधो ज्ञेयो ह्यनूपो जाङ्गलस्तथा ॥
साधारणो विशेषेण ज्ञातव्यास्ते मनीषिभिः ॥ २ ॥

अनूप—जांगल—साधारण—इन नामोंसे देश तीन प्रकारका है और बुद्धिमानोंनें—वे देश विशेष करकै जानने चाहिये ॥ २ ॥

अथ अनूपदेशलक्षण ॥

वहुतरशुभनद्यश्चारुपानीयपुष्टाः सरससरउपेता शाद्वलासारभूमिः ॥ हरितकुशजलानां शालिकेदाररम्यादिनकरकरदीप्तिं वाञ्छते यत्र लोकः ॥ ३ ॥ गुरुमधुररसाढ्या भाति चेक्षुः सदार्द्रा विविधजनितवर्णाः शालिगोधूमयूषाः ॥ मधुररसविभुक्त्या मानवानां प्रकोपी भवति कफ समीरः स्यात्तदानूपदेशः ॥ ४ ॥

अथ अनूपदेशलक्षण—सुंदर पानीसे पुष्टहुई वहुतसी सुंदर नदी जहां होवै और रसवाले वृक्षोंसे व्याप्त और हरी दूव घास आदिसे व्याप्तहुई पृथिवी जहां होवै और हरीकुशा तथा पानीसे व्याप्तहुये जो चावलोंके खेत तिन्हों करकै रमणीक हुई है पृथिवी जहां और जहां सूर्य्यकी किरनोंको संसार वांछित करता है ॥ ३ ॥ और जहां भारे और मधुर रससे संयुक्त और सबकालमें गीली ऐसी ईख होती है और जहां अनेक वर्णोंवाले चावल और गेहूं आदि उपजतेहैं—और जहां मधुररसको खानेसे मनुष्योंके वात और कफका कोप होता है तिसको अनूपदेश कहते हैं ॥ ४ ॥

अथ जाङ्गलदेशलक्षण ॥

खरपरुषविशालाः पर्वताः कण्टकीर्णा दिशि दिशि मृगतृष्णा भूरुहाः शीर्णपर्णाः ॥ अतिखररविरश्मीपांशुसम्पूर्णभूमिः सरसि रसविहीनः कूपकाम्भःप्रकर्षः॥५॥ तदनु विरसस्याहारिणो गोमहिष्यःप्रभवति रसमांसे रूक्षभावश्च सम्यक् ॥ पुनरपि हिमवाहं शालिशस्यं न चेक्षुर्भवति रुधिरपित्तं कोपमाशु ह्युपैति ॥ ६ ॥

अथ जांगलदेशलक्षण—तीक्ष्ण और कठोर पर्वत जहां स्थित है और जहां कांटोंसे व्याप्तजहां दिशामें मृगतृष्णा अर्थात् विनाहुआ जल मृगोंको प्रतीत होता है और जहां कर्कसा वैधे पत्ते वृक्ष स्थित हैं और जहां अति तेज सूर्य्यके किरनोंसे गर्महुये रेतसे संपूर्ण

पृथिवी व्याप्त होरही है और जहां रससे हीन होताहुआ कुवाका पानी घटता जाता है ॥५॥ और जहां विनारसके धान्यखानेसें हस्ती, गाय, भैंस, ये बहुत प्रसन्न नहीं होते हैं और जहां रसमें जहां और मांसमें रूषापन उपजता है और शीतलवायु—चावलकी खेती—ईख ये नहीं उपजते हैं और जहां रक्त और पित्त शीघ्र कोपको प्राप्त होता है तिसको जांगलदेश कहते हैं ॥ ६ ॥

### अथ साधारणदेशलक्षण ॥

उभयगुणशतं वा नातिरूक्षं न स्निग्धं न च खरबहुलं चेच्चाजितःकण्टकाढ्यम् ॥ भवति च जलकीर्णं नातिशीतं न चोष्णं समप्रकृतिसमेतं विद्धि साधारणं च ॥ ७ ॥

अथ साधारणदेशलक्षण—जहां अनूपदेशके और जांगलदेशके बहुतसे लक्षण अर्थात् गुणहों और जहां न अति रूषापनहो और न चिकनापन है और जहां तेजकी बहुलता नहींहो और जो सब तर्फसे कांटोंसे व्याप्त होरहाहो और जहां साधारण पाणीहों और न अतिशीत अर्थात् जाडाहो और न अति गर्मीहो और समानप्रकृतिसे संयुक्तहो तिसको साधारण देश कहते हैं ॥ ७ ॥

### अथ कालज्ञान ॥

कालस्तु त्रिविधो ज्ञेयोऽतीतोऽनागत एव च ॥
वर्त्तमानस्तृतीयस्तु वक्ष्यामि शृणु लक्षणम् ॥ ८ ॥

अथ कालज्ञान—काल तीन प्रकारका है अतीत अर्थात् बीताहुआ—अनागत अर्थात् आनेवाला-वर्तमान अर्थात् वर्तताहुआ इन्होंके लक्षण कहताहूं तू सुन ॥८॥

### कालका स्वरूप ॥

कालःकालयते लोके कालः कालयते जगत् ॥ कालः कालयते विश्वं तेन कालो विधीयते ॥९॥ कालस्य वशगाः सर्वे देवर्षिसिद्धकिन्नराः॥ कालो हि भगवान् देवः स साक्षात्परमेश्वरः ॥ १० ॥ सर्गपालनसंहर्त्ता स कालः सर्वतः समः ॥ कालेन काल्यते विश्वं तेन कालो विधीयते ॥ ११ ॥

काल लोककी संख्या करता है काल जगत्की संख्या करता है काल विश्वकी संख्या करता है तिस्से काल कहाता है ॥ ९ ॥ सब देव, ऋषि, सिद्ध, किन्नर, ये सब कालके वशमें है और

भगवान् देव साक्षात् परमेश्वर ऐसा कालही है ॥ १० ॥ सृष्टि, स्थिति, संहार, इन्होंको करनेवाला और सब जगहसे समान ऐसा कालही है कालसे विश्व संख्याको प्राप्त होता है तिस्से काल कहाता है ॥ ११ ॥

उत्पाक कालका स्वरूप ॥

येनोत्पत्तिश्च जायेत येन वै कल्पते कला ॥
सत्त्ववांस्तु भवेत्कालो जगदुत्पत्तिकारकः॥ १२ ॥

जिस्से उत्पत्ति होती है और जिस्से कलाओंकी गिनती होती है इसवास्ते सत्ववाला काल जगतकी उत्पत्तिको करता है॥१२॥

प्रवर्तक कालका स्वरूप ॥

यः कर्माणि प्रपश्येत प्रकर्षं वर्त्तमानके ॥
सोऽपि प्रवर्त्तको ज्ञेयः कालःस्यात्प्रतिकालकः ॥ १३ ॥

वर्तमानमें जो कर्मोंको देखता है वह प्रवर्तक जानना और कालही प्रतिपालक होता है१३

संहारक कालका स्वरूप ॥

येन मृत्युवशं याति कृतं येन लयं व्रजेत् ॥
संहर्त्ता सोऽपि विज्ञेयः कालः स्यात्कलनापरः॥१४॥

जिसकाल करके जीव मृत्युके वशको प्राप्त होता है और जिस करके कृत अर्थात् किया हुआ लयको प्राप्त होता है वही काल संहार करनेवाला जानना यही काल संख्याको करनेवाला है ॥ १४ ॥

कालका सनातनत्व ॥

कालः सृजति भूतानि कालः संहरते प्रजाः ॥
कालः स्वपिति जागर्त्ति कालो हि दुरतिक्रमः॥ १५ ॥

कालही जीवोंको रचता है कालही प्रजाको हरता है कालही शयन करता है कालही जागता है काल दुरतिक्रम है अर्थात् उल्लंघन नहीं कियाजाता ॥ १५ ॥

कालका नाशकस्वरूप ॥

काले देवा विनश्यन्ति काले चासुरपन्नगाः ॥
नरेन्द्राः सर्वजीवाश्च काले सर्वं विनश्यति ॥ १६ ॥

काल अर्थात् समयमें देवता नष्ट होजातेहैं और कालमें ही दैत्य और सर्प नष्ट होते हैं राजे और सब जीव कालमेंही नष्ट होते हैं कालमेंही संपूर्ण नष्टहोता है ॥ १६ ॥

अथ अन्यकालोंके स्वरूप ॥

त्रिकालात् परतो ज्ञेय आगन्तुर्गतचेष्टकः ॥ सूक्ष्मोऽपि सर्वगः सर्वैर्व्य क्ताव्यक्ततरः शुभः ॥ १७ ॥ तथा वर्षाहिमोष्णाख्यास्त्रयः काला इमे मताः ॥ तथा त्रयोऽन्येऽपि ज्ञेया उदयमध्यास्तमेव च ॥ १८ ॥

आगंतु और चेष्टासे रहित और सूक्ष्म और सबोंकरकै सर्वगत और अतिव्यक्त और अति अव्यक्तसे पर और शुभ ऐसा ऐसा काल त्रिकालसे परे जानना चाहिये॥१७॥वर्षा,शीत, गर्मी,ये तीन काल माने गये हैं और उदय,मध्य,अस्त,ऐसे तीन अन्यभी काल जानने॥१८॥

अथ ऋतुचर्य्या ॥

वर्षा शरच्च हेमन्तः शिशिरश्च वसन्तकः ॥ ग्रीष्मोऽतिक्रमतो ज्ञेय एवं षड् ऋतवः स्मृताः॥ १९ ॥ पृथक् पृथक् प्रवक्ष्यामि रवेर्गतिविशेषणैः॥ प्रकोपं शमनं ज्ञात्वा अयने द्वे स्मृते बुधैः ॥ २० ॥ दक्षिणायनमेकं स्यात् द्वितीयं चोत्तरायणम् ॥

अथ ऋतुचर्य्या—वर्षा, शरद, हेमंत, शिशिर, वसंत, ग्रीष्म ये क्रमसे छः ऋतु कहे ॥१९॥ इन ऋतुओंको पृथक् २ कहुंगा सूर्यकी गतिके विशेषसे प्रकोप और शमनको जान पंडितोंनें दो अयन कहे है ॥ २० ॥ एक दक्षिणायन होता है दूसरा उत्तरायण होता है

अयनोंका वर्णन ॥

वर्षा शरच्च हेमन्तो दक्षिणायनमध्यगाः ॥ २१ ॥
शिशिरश्च वसन्तश्च ग्रीष्मः स्यादुत्तरायणे ॥

वर्षा-शरद-हेमंत-ये तीन ऋतु दक्षिणायनमें होते हैं ॥ २१ ॥ शिशिर, वसंत, ग्रीष्म ये तीन ऋतु उत्तरायणमें होते है

दक्षिणायनकालक्षण ॥

याम्ये गतिर्यदा भानोस्तदा चान्द्रगुणा मही ॥ २२ ॥ वारि शीतलस म्भूतं शीतं तत्र प्रजायते ॥ बलिनो मधुरास्तिक्ताः कषायास्तु विशेषतः ॥२३॥ जीवानां सात्म्यमतुलमोषधीनां च वीर्यता॥आर्द्रत्वं भूधराणाञ्च दिशश्चाप्यतिशीतलाः ॥ २४ ॥ सक्लेदा पृथिवी सर्वा तस्मादार्द्रा सफे

निला ॥ कथं चिकित्सयेत् पित्तं कोपं याति विलीयते॥२५॥ तस्मादनु त्रिपर्य्यासादुपचारेण शाम्यति ॥

जब दक्षिणायणमें सूर्यकी गति होती है तब चंद्रमाके गुणोंवाली पृथिवी होजाती है ॥ २२ ॥ और शीतल पानी होजाता है और शीत पड़ने लगता है और मधुर तिक्त कसेला ये रस विशेष करकै बलवाले हो जाते हैं ॥ २३ ॥ और ओषधी अर्थात् अन्न आदिकोंकी तथा जीवोंकी प्रकृति बहोतही अच्छी रहती है और पर्वतभी गीले होजाते हैं और दिशाभी अति शीतल हो जाती हैं ॥ २४ ॥ और क्लेदभाव सहित संपूर्ण पृथिवी हो जाती है और तिसी कारणसे गीली और झागोंवाली पृथिवी होजाती है जहां पित्त कोपको प्राप्त हो जाता है या लीन होजाता है वहां चिकित्सा कैसे होसक्ती है ? ॥ २५ ॥ तिस कारणसे विपर्य्यास करकै चिकित्सासे पित्त शांत होता है

## उत्तरायणका लक्षण ॥

यदोदीच्यां गतिर्भानोस्तदा सूर्य्यो जलाधिपः ॥ २६ ॥ तस्मादुष्णगुणास्तीव्राः सम्भवन्ति विदाहिनः ॥ खरसूर्य्यांशुजालैस्तु शुष्यते वनकाननम् ॥ २७ ॥ संशुष्का मेदिनी सर्वा दिशः पानादिनीरसा ॥ बलिनोऽम्लकटुक्षाराः सम्भवन्ति विदाहिनः ॥ २८ ॥ तस्मात् संकुप्यते पित्तं रक्तेन सह मूर्च्छितम्॥ओषधिरसः संशुष्को गोजातीनां पयांसि च॥२९॥अल्पं बलं च जन्तूनां कथञ्चित्कफसम्भवः ॥ दृश्यते च वसन्ते च स्वयमेव शमं व्रजेत्॥३०॥एवं ज्ञात्वा सुधीः सम्यक्कुर्य्यात्सर्वप्रतिक्रियाम् ॥ ३१ ॥

जब उत्तर दिशामें सूर्य्यकी गति होती है तब सूर्य्य जलोंका स्वामी हो जाता है ॥ २६॥ तिस्से दारुण रूप और विशेप करकै दाहको करनेवाले ऐसे गुण उपजते हैं और सूर्य्यके तेज किरणोंके समूहसे वन बगीचे सूख जाते हैं ॥२७॥ और संपूर्ण पृथिवी सूख जाती है और जलआदिसे रहित सब दिशा होजाती हैं और खट्टा, चर्चरा, खारा ये रस बलवाले और विशेष करकै दाहको करनेवाले होते हैं ॥ २८ ॥ तिस्से रक्तके साथ मूर्च्छितहुआ पित्त कुपित होता है और ओषधियोंका रस और गायआदिका दूध सूख जाताहै ॥ २९ ॥ और जीवोंमें अल्प बल उपजता है और कदाचित् कफकीभी उत्पत्ति होजाती है और वहां कफकी उत्पत्ति वसंत ऋतु अर्थात् चैत्र वैशाखमें दीखती है और आपही शांत हो जाती है ॥ ३० ॥ ऐसे अच्छी तरह वैद्य जानकै सब रोगोंकी चिकित्साको करै ॥ ३१ ॥

अथ वर्षाऋतुका लक्षण ॥

सघनवारिदवारिसमाकुला अखिलवत्मवरोदकपूरिताः ॥ समदवात करा विदिशो दिशः प्रमुदितक्रिमिकीटभृता मही ॥ ३२ ॥ नील सस्यहरितोज्ज्वला मही कुल्यका सलिलसंप्लुता नता ॥ इन्द्रगोपक राजिविराजिता पङ्कभूषणविभूषिता धरा ॥३३॥ उद्भिन्नचूताङ्कुरो भूधरः स्याद्रेजे वनं वा मधुरं व्यकूजन् ॥ भृङ्गा मयूरा जलदस्य घोषं सर्वेऽपि जीवा बलमाप्नुवन्ति ॥ ३४ ॥ केकी कूजति कानने च सरसी म्लानाम्बुपूर्णा तथा हंसा मानसमाव्रजन्ति कमलान्युन्म्लानतां यान्ति च ॥ गर्जन्मेघमहेन्द्रकन्दरदरी सस्यावृता श्यामला भात्येवं पवनस्य कोपनकरी वर्षाऋतुः श्रेयसी ॥ ३५ ॥ किञ्चिद्गर्भोद्भवानि स्युः सस्यानां दृढतां गमः॥बहुसस्या भवेद्धात्री वारिपूर्णा शरन्मुहुः॥३६॥ नद्यःपूर्णाम्भसोत्खातशीर्णपातास्तटद्रुमाः ॥ कुल्याप्रस्रवणानान्तु स्रवत्यम्भो दिशो दिशः ॥ ३७ ॥ बहूदकधरा मेघा बहुवृक्षा घनस्वनाः ॥ एवंगुणसमायुक्ता वर्षा स्यादृतुकोविदैः ॥ ३८ ॥ तस्माद्वातकफः कोपी जायते च नृणां भृशम्॥ इति ज्ञात्वा भिषक्छ्रेष्ठः कुर्य्यात्तस्यां प्रतिक्रियाम्॥३९॥ स्वेदनं मर्दनं पथ्यं निर्वातसेवनं तथा ॥ गौरारामारतं शस्तं व्यायामक्रमविक्रमः ॥ ४० ॥ कट्वम्लक्षारसुरसाः सेव्या वातकफापहाः ॥ निरूहवस्तिकर्मात्र कफवातरुजापहम् ॥ ४१ ॥

अथ ऋतुलक्षण–प्रथम वर्षाऋतुका लक्षण और उपचार–मोटे बादल और पानीसे अच्छी तरह आकुल हो और संपूर्ण तरहसे सुंदर पानी करकै पूरित और मदसहित वायुको करनेवाली सब विदिशा और दिशा होवैं और आनंदित हुये कीडोंको धारण करनेवाली पृथिवी होवै ॥३२॥ और नीली खेती और दूब घाससे प्रकाशित पृथिवी होवै पानीसे मग्न हुये और नयेहुये नदीके किनारे होवें और इंद्रगोप अर्थात् तीज नामवाले कीडोंकी पंक्तियोंसे शोभित और पंक अर्थात् कीचडरूपी गहनोंसे विभूषित ऐसी पृथिवी होजावै॥३३॥ और ऊपरको कर निकल आयेहुये आमके अंकुरोंवाले पर्वत हो जावैं और वन प्रकाशित होजावै और भौंरे तथा मोर मधुर शब्दको करैं और बादलोंका शब्द होवै और सब जीव बलको प्राप्त होजावै॥३४॥वनमें मोर बोलै और सरोवर पक्षिओं करिकै रहित तथा पानीसे पूरितहोजावै और हंस मानससरोवरमें आकै प्राप्त होजावै और कमल म्लानपनेको प्राप्त होजावै

और गर्जताहुआ मेघ और महेंद्र करकै फटीहुई कंदरां वाली और खेतीसे आवृत और श्याम-रूपवाली ऐसी पृथिवी प्रकाशित होजावै ऐसी वर्षाऋतु श्रेष्ठ होतीहै यह वायुको कोपित करतीहै॥३५॥ और खेतियोंके कछुक गाभा तथा दृढपना उपजै और बहुतसी खेतीसे संयुक्त और पानीसे पूर्ण ऐसी पृथिवी होवै और वारंवार शरदऋतुकेभी कछुक लक्षण मिलै ॥३६॥ और नदीमें नहीं पूरितहुये पानीसे उखाडे हुये और गिरेहुये पत्तोंवाले ऐसे तटके वृक्ष होवैं और नाली झिरनोंके द्वारा दिशा दिशामें पानीको झिरावै ॥ ३७ ॥ और बहुत पानीको धारनेवाले और बहुतसे शब्दको करनेवाले ऐसे मेघ होजावै और बहुतसे वृक्ष उपजै ऐसे गुणोंसे संयुक्त वर्षाऋतु होतीहै ऐसा ऋतुओंको जाननेवालोंनें कहा है ॥ ३८ ॥ इस ऋतुमें मनुष्योंके अतिशयसे वात कफका कोप होता है ऐसे कुशलवैद्य जानकै तिसकोपकी चिकित्सा करै ॥ ३९ ॥ स्वेदन अर्थात् पसीनाका लाना–मर्दन अर्थात् शरीरको दाबना- और वातको नहीं सेवना–गौर वर्णकी स्त्रीसे रति करना–कसरत करना ये सब वात कफके कोपमें श्रेष्ठ पथ्य है॥४०॥चर्चरा–खट्टा–खारा ये रस सेवने वात कफको नाशते है निरूह और वस्तिकर्म्म कफ और वातकी पीडाको नाशते हैं ॥ ४१ ॥

## अथ शरदृतुका लक्षण ॥

मेघाः सूर्य्यशिलासमानरुचयो ह्यल्पस्रवाल्पस्वना हंसालीजलजालिमण्डितजलं पद्माकरं शोभनम्॥तीव्रस्निग्धमयूखचन्द्रविमला सानन्दिनी कौमुदी चित्रा घर्मविपक्वतोयसुरसा स्यान्निर्मलं पुष्करम् ॥ ४२ ॥ तत्र शीतलगतं वयोगतं जातपित्तरुधिरस्य योग्यताम् ॥ पथ्यमत्र च नरस्य शीतलं दृश्यते कथमपि त्रयोद्भवम् ॥ ४३॥ श्टतं क्षीरं सिता पथ्यं चन्द्रिकासेवनं निशि ॥ श्यामारामारतं शस्तं प्रभाते निर्मलं दधि॥ ४४ ॥ कामिन्यालिङ्गनानन्दश्रान्तः शीतसिरोरुहैः ॥ चंदनादीनि सेवेत दृष्टं शरदि कोपनम् ॥ एवं प्रशमनं दृष्टं शरत्पित्तप्रकोपने ॥ ४५ ॥

अथ शरदऋतुका लक्षण और उपचार–सूर्य्य और शिलाके समान रुचिवाले और अल्प झिरनेवाले और अल्प शब्दको करनेवाले ऐसे मेघ होजावै और हंसोंकी पंक्ति तथा कमलोंकी पंक्ति तिसकरकै मंडित जलवाला और शोभित कमलोंका स्थान होजावै और तीव्र तथा स्निग्धरूपी किरनोंवाले चंद्रमासे स्वच्छ और आनंदवाली और चित्ररूपवाली और घामसे पक्कहुये पानीसे सुरसरूप ऐसी चांदनी होवै और मलसे रहित पानी होवै ॥ ४२ ॥ जाती शरदऋतुमें आकाशका पानी और पित्तरक्तके योग्य पदार्थ और शीतल पदार्थ येसब

थ्य है इसऋतुमें सन्निपातका कोप कदाचित् होता है ॥ ४३ ॥ घृत–दूध–मिश्री–रात्रीमें चांदकी चांदनीको सेवना-श्यामरंगकी वाला स्त्रीसे भोग-प्रभातमें निर्मलदही ये सब शरदऋतुमें पथ्य है ॥४४॥ स्त्रीके आलिंगनसे प्राप्तहुये आनंदसे श्रांतहुये पुरुष कमलोंकरके अपने श्रम दूर करै, और शरदऋतुमें पित्तका प्रकोप होनेसें चंदनादिकोंका लेप करै यह कमलधारण और चंदनानुलेपन शरदऋतुमें पित्तके प्रकोपका शमन कारीहै ऐसा देखा है ॥ ४५ ॥

## अथ हेमन्तवर्णनम्

बहुशीतः समीरोऽल्पश्चाल्पवासरता ऋतौ ॥ अल्पतेजा दिवानाथो धूमाक्रांताच दिग्भवेत्॥४६॥ विस्तीर्णशालिकेदारा नीलधान्योज्वला मही॥ एवंगुणसमायुक्ता हैमन्ती स्म भवेदृतुः ॥ ४७ ॥ तत्र वातकफा दोषा दृश्यंते कुपिता भृशम् ॥ अग्निसंसेवनं पथ्यं कटुक्षाराम्लसेवनम् ॥ ४८॥ गौरारामारतं शस्तं व्यायामश्च प्रशस्यते ॥ एवं संशाम्यंति दोषाः कफवातसमुद्भवाः ॥ ४९ ॥ बलिनः शीतसंरोधा हेमन्ते प्रबलोऽनिलः ॥ भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ॥ ५० ॥ अतो हिमेऽस्मिन् सेवेत स्वाद्वम्ललवणान्रसान् ॥ दीर्घानिशानामेतर्हि प्रातरेव बुभुक्षितः ॥ ५१ ॥ भवन्त्यकार्य्यं संभाव्य यथोक्तं शीलयेदनु ॥ ५२ ॥ अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ॥ प्रातर्भुक्त्वा च मधुरकषायकटुतिक्तकम् ॥ ५३ ॥

अथ हेमंतऋतुका लक्षण और उपचार–बहुत शीतलवायु चलै अथवा वायु अल्पचलै और दिनका समय थोडा होजावै और अल्प तेजवाला सूर्यरहै और धूमेंसे आकुलित हुई दिशा होवै ॥४६॥ और विस्तारको प्राप्तहुये चावलोंके खेत होवें और नील तथा अन्नसे प्रकाशित पृथिवी होवै ऐसे गुणोंसे संयुक्त हेमंतऋतु होता है ॥ ४७ ॥ इस ऋतुमें अतिशयसे कुपितहुये वात और कफ दीखते हैं इसमें अग्नि सेवना और चर्चरा–खारा–खट्टा–इन्होंको सेवना पथ्य है ॥ ४८ ॥ गौरवर्णवाली स्त्रीसे भोग करना और कसरत करना श्रेष्ठ है ऐसे कफवातसे उपजा दोष शांत होता है ॥ ४९ ॥ कितनेक वैद्योंका मत–बलवाले मनुष्यके शीतको रोकनेसे हेमं[illegible] हो जाताहै पीछे वायुसे प्रेरित किया यही वायु अल्प आह[illegible] धातुओंको पकाता है ॥ ५० ॥ इसवास्ते शीतकालमें स्वादु,–खट्टा,–[illegible]ोंको सेवै और हेमंतऋतुमें बडी रात्रियोंके होनेसे प्रभातमेंही भोजन करनेकी[illegible] मनु-

प्य हो जाता है ॥ ५१ ॥ इसवास्ते अकार्यकी संभावना करकै यथोक्त द्रव्यका अभ्यास करै ॥ ५२ ॥ आक, वड, खैर, करंजुआ, अर्जुनवृक्ष इन आदिको प्रभातमें खाकै पीछे मधुर, कसैला, चर्चरा, कडुआ इनं रसोंको सेवै ॥ ५३ ॥

## अथ शिशिरवर्णनम् ॥

बहुलशिशिरवातः किञ्चिदुद्भूतसस्या भवति वसुमतीयं पक्वशस्यैस्तु पं ता ॥ कथमपि तु हिमं स्याल्लिङ्गवैशेषिकं वा पवनकफविकारो जाय शैशिरे च ॥ ५४ ॥ गौरारामारतमतिशयेनारुणान्यम्बराणि सेव्यं तिक्तं कटुकलवणं प्रायशो ह्यम्लमेव ॥ स्वेदोन्मर्दं प्रतिदिनमिदं कारयेद्यत्र स म्यग् नाशं यातोऽनिलकफपदो क्वास्ति तेषां प्रकोपः ॥ ५५ ॥

अथ शिशिरऋतुका लक्षण और उपचार—बहुत शीतल वायु चलै और पृथ्वीपर कछुक धान्य उत्पन्न हो और पकी हुई खेतीसे पीली पृथिवी होवै और जाडा पडै और चिन्हकी विशेषता हो तिसको शिशिर ऋतु कहते हैं इसमें वात और कफके विकार उपजते हैं ॥ ५४ ॥ और इस ऋतुमें गौरवर्णवाली स्त्रीसे भोग करना और अतिशय करके लाल रंगके वस्त्रोंको पहनना और कडुआ, चर्चरा, सलोना ये रस सेवने चाहिये और विशेष करकै खट्टा रस सेवना चाहिये और इस ऋतुमें पसीनाका लाना और मर्दन करना नित्यमती अच्छी तरह करना चाहिये ऐसे करनेसें वात और कफके रोग नाशको प्राप्त हो जाते हैं और तिनोंके प्रकोपकी कौन कथा है ॥ ५५ ॥

## अथ वसंततुर्वर्णनम् ॥

मुदितकोकिलकूजितकाननं मदनसूचितकिंशुकशोभितम् ॥ कुसुमसौरभ रञ्जितभूधरं क्वणितमत्तमधुव्रतलालसम् ॥ ५६ ॥ मकरकेतनबाणसमा कुलं मुदितमेव समस्तमिदं जगत् ॥ मलयमारुत उष्णगुणान्वितः क फकरो हि वसन्तऋतुर्भवेत् ॥ ५७ ॥ कफजकोपविनाशनलालनं वमन नावनरूक्षनिषेवणम् ॥ ५८ ॥ विविधः सुरतानन्दः सम्भ्रमः कफवार णः ॥ व्यायामश्रमसंरोधखिन्नविश्रान्तमानसः ॥ ५९ ॥ कटुक्षाराम्लाः सेव्याश्च शोषणं कफसम्भवम् ॥ एवंक्रियासमापन्नो नरः शीघ्रं सुखी भवेत् ॥ ६० ॥

अथ वसंतऋतुका लक्षण और उपचार–जहां आनंदित हुये कोयल पक्षी वनमें बोले और कामदेवको सूचित करते हुये केशूके फूलोंसे शोभा हो और फूलोंके गंधसे रंजित पर्वत होवें और जहां खेलते हुये और मदवाले भोरोंकी शोभाहो ॥ ५६ ॥ और कामदेवके बाणसे समाकुल और आनंदित जगत् होवै तिसको वसंतऋतु कहते हैं यह सुंदर वायुसे और उष्ण गुणसे अन्वितहुआ वसंतऋतु होता है यह कफको उपजाता है ॥ ५७ ॥ इस ऋतुमें वमन–नस्य–रूखापदार्थ–इन्होंको सेवना कफके कोपको नाशता है ॥ ५८ ॥ अनेक प्रकारसे कामदेवका आनंद और अच्छीतरह चलना फिरना कफको दूर करता है और इसऋतुमें कसरतका परिश्रमके रोकनेसे स्वेदित और श्रांतमनवाला मनुष्य सुखी रहता है ॥ ५९॥ और चर्चरा, खारा, खट्टा, ये रस सेवने चाहिये ये कफको शोषते हैं ऐसी क्रियाको प्राप्तहुआ मनुष्य शीघ्र सुखी होजाताहै ॥ ६० ॥

## अथ ग्रीष्मवर्णन ॥

दीर्घवासरसंतीक्ष्णं ज्वालामालाकुलं जगत् ॥ दिशि दिशि मृगतृष्णा चोष्णं भृशं भवेद्रजः ॥ ६१ ॥ नैर्ऋतो मारुतो रूक्षः शीर्णपर्णा महीरुहः॥ दग्धतृणाकुलारण्यं दावाग्निसङ्कुला दिशः॥६२॥ एवं तु लक्ष्म ग्रीष्मस्य पित्तरक्तमुदीर्य्यते ॥ तस्मात् क्रियाप्रतीकारं कुर्य्यात् संशमनं भिषक् ॥ ६३ ॥ जलक्रीडादिवानिद्रासेवनं सुखसाधनम् ॥ श्यामारामारतं शस्तं किञ्जल्कं कुञ्जशीतलम् ॥ ६४ ॥ नीलनालदलोपेतः श्रमघ्नो व्यजनानिलः ॥ केतक्यामोदकुसुमं चन्दनोशीरशीतलैः ॥ ६५ ॥ लेपनं शीतलं सम्यग्धारागाराशयः पुनः ॥ एवंक्रियासमापन्नो ग्रीष्मे च सुखसङ्गमः ॥ ६६ ॥ इति आत्रेयभाषिते ऋतुचर्य्यानाम चतुर्थोऽध्यायः ॥ ४ ॥

अथ ग्रीष्मऋतुका लक्षण और उपचार–बडे दिन होवै और तीक्ष्ण होवै और गरमीके समूहसे जगत् व्याकुल होजावै और दिशा दिशमें मृगतृष्णा अर्थात् विनाहुआ जलसा प्रतीत होवै और अति गर्मी और धूली उडे ॥ ६१ ॥ नैर्ऋतदिशाका रूखा वायु चलै–और वृक्षोंके पत्ते उडजावै और दग्धहुये तृणोंके समूहसे व्याप्त वन होवै और दावाग्निसे संकुलित दिशा होजावै ॥ ६२ ॥ तिसको ग्रीष्मऋतु कहते हैं इसमें पित्त और रक्त बढता है तिसवास्ते वैद्य रक्तपित्तको शमन करनेवाली क्रियाको करै ॥ ६३ ॥ इस ऋतुमें जलकी क्रीडा दिनमें शयन करना श्यामवर्णवाली स्त्रीसे भोग करना और कछुक शीतल वस्तुको सेवना ये पथ्य है ॥ ६४ ॥ नीले कमलके पत्तोंसे संयुक्तहुये पंखेकी पवन ग्रीष्मके परिश्रमको

हरता है और केतकीके खिलेहुये फूल, सफेद चंदन, खस, शीतलचीज, इन्हों करकै ॥६५॥ अच्छीतरह लेप करना और फुहाराके स्थानमें वसना ऐसे क्रियाको प्राप्तहुआ मनुष्य ग्रीष्म-ऋतुमें सुखी रहता है ॥ ६६ ॥ इति वेरीनिवासिवुधशिवसहायसूनुवैद्यरविदत्तशास्त्रिअनुवा-दितहारीतसंहिताभाषायां प्रथमस्थाने ऋतुचर्य्यानाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥

अथातो वयोज्ञानं वक्ष्यते ॥

वयश्चतुर्विधं प्रोक्तमुत्तमाधममध्यमम् ॥ हीनं चातुर्थिकं प्रोक्तं तानि व क्ष्यामि साम्प्रतम् ॥ १ ॥ बालं युवानं वृद्धं च मध्यमं च तथैव च ॥ चतुर्विधं वयः सम्यक् तत्समासेन वक्ष्यते ॥ २ ॥

इसके अनंतर वय अर्थात् अवस्थाके ज्ञानको कहैंगे–अवस्था चार प्रकारसे कही है उत्तम, अधम, मध्यम, हीन, ऐसे तिन्होंको अब कहताहूं ॥ १ ॥ बालक, जुवान, वृद्ध, मध्यम, ऐसे चार प्रकारकी अवस्था हैं तिसको विस्तारसे कहताहूं ॥ २ ॥

मध्यमवयोलक्षणम्

पथि श्रान्तं श्रमक्षीणं बालस्त्री सुकुमारकम् ॥
एतेषां मध्यमा संज्ञा प्रोच्यते वैद्यकागमे ॥ ३ ॥

रस्तामें श्रांतहुआ और श्रमसे क्षीणहुआ, बालक, स्त्री, सुकुमार अर्थात् कोमल म-नुष्य, इन्होंकी वैद्यकशास्त्रमें मध्यम संज्ञा कही है ॥ ३ ॥

आषोडशाद्भवेद्बालः पञ्चविंशो युवा नरः ॥ मध्यमं सप्ततिर्य्यावत्परतो वृद्ध उच्यते ॥ ४ ॥ तथा च सुकुमारश्चेत्येते मध्यमसंज्ञकाः॥ वयसः षो डशाधिक्यं समयश्च भवेत्तु यः ॥ ५ ॥ आविंशति समाः प्राप्तो यथा च कृशदेहवान् ॥ पूर्णं वयः स्त्रियः प्राप्ता मध्यमे चाधमं वयः ॥ ६ ॥

सोलहवर्षतक बालक अवस्था होती है पच्चीस वर्षतक जुवान अवस्था होती है सत्तर-वर्षतक मध्य अवस्था होती है इससे पर वृद्ध अवस्था है ॥४॥ये तीन और सुकुमार ये सब, मध्यमसंज्ञक हैं तिसको सोलहवर्षसे अधिक जो समय प्राप्त होवै ॥५॥ और वीशवर्षतक और

जैसे कृश देहवाला होता है वैसेही रहै और जो सुकुमार स्त्री पूर्णअवस्थातक ऐसीही रहै यह मध्यम अवस्थामें अधम अवस्था कहाती है ॥ ६ ॥

पञ्चविंशत्समादूर्ध्वमापञ्चाशद्गतः पुमान् ॥ कर्मकठोरा वनिता दृश्यते चोत्तमं वयः ॥ ७ ॥ सप्तविंशत्समादूर्ध्वं पञ्चाशत्संयुताः समाः ॥ बालवृद्धिस्तथा यस्य इत्येतदुत्तमं वयः ॥ ८ ॥

पच्चीसवर्षसे उपरंत और पचाशवर्षतक और क्रियामें कठोर पुरुष और स्त्री रहते है यह उत्तम अवस्था दीखती है ॥ ७ ॥ सत्ताईस वर्षसे उपरंत और पचाशवर्षतक जिस मनुष्यके वालोंकी वृद्धिहोवे यहभी उत्तम अवस्था है ॥ ८ ॥

स्थूलोऽतिदीर्घकठिनस्तथा स्त्री बृहदोदरा ॥
इत्युत्तमो ऽवयववाञ्ज्ञातव्यश्चोत्तमोत्तमः ॥९॥

स्थूल-अतिलंबा-कठोर-ऐसा पुरुष होवै और बडे पेटवाली स्त्री होवै ऐसे उत्तम अवयवों-वाला मनुष्य होता है यह उत्तमोत्तम मनुष्य जानना ॥ ९ ॥

षष्ठ्यूर्ध्वमशीतिसमाः प्राप्तं हीनबलं वयः ॥
तदूर्ध्वं हीनहीनश्च विज्ञेयो वयसः क्रमः॥१०॥

साठवर्षसे उपरंत अस्सावर्षतक हीनबल अवस्था होती है और अस्सीवर्षसे उपरंत हीनसेभी हीन अवस्था होती है ऐसे अवस्थाका क्रम जानना चाहिये ॥ १० ॥

क्षीणाध्वश्रान्तसंखिन्नस्तथा रोगानुपीडितः ॥
रूक्षश्चातिकृशो ज्ञेयो बालसात्म्यमुदाहृतम् ॥११॥

क्षीण-मार्गमें श्रांतहुआ खेदको प्राप्तहुआ-रोगसे पीडित हुआ-रूखा-अति कृश-ये मनुष्य बालककी प्रकृतिके समान प्रकृतिवाले होते हैं ॥ ११ ॥

सुकुमारोऽतिभीरुश्च मध्यकायस्त्रियोपि वा ॥
मध्यसात्म्योऽपि विज्ञेयो मध्यमो वयसात्म्यकः ॥ १२ ॥

कोमल शरीरवाला-अति डरनेवाला-मध्य शरीरवाला-स्त्री-मध्य प्रकृतिवाला-ऐसा मनुष्य मध्य अवस्थावाला जानना ॥ १२ ॥

पञ्चवर्षा स्मृता बाला मुग्धा च षट्समावधिम् ॥ द्वादशाब्दं स्मृता बाला मुग्धा स्यात्सप्तमावधिम् ॥ १३ ॥ प्रौढा च नववर्षाणि प्रगल्भा च त्रयोदश ॥ चतुर्विंशद्वर्षादूर्ध्वं सप्तत्रिंशतिमध्यगाः॥ पूर्णं वयःस्त्रियः प्राप्ता इत्येतदुत्तमं वयः ॥ १४ ॥

पांच वर्षकी स्त्री बालक कहाती है और पीचसे आगे छः वर्षतक स्त्री मुग्धा कहाती है अथवा बारह वर्षकी स्त्री बाला कहाती है और बारहवर्षके आगे सात वर्षसे लगायत स्त्री-मुग्धा कहाती है ॥१३॥तिसके पीछे नव वर्षतक स्त्री प्रौढा कहाती है और तिसके पीछे तेरह वर्षतककी स्त्री प्रगल्भा कहाती है. और इतनेवयके बीचमेंही और चौवीसवर्षसे उपरंत सैंतीस-वर्षतक मध्य अवस्थाकी स्त्री पूर्ण अवस्थाको प्राप्त होती है यह उन्होंकी उत्तम अवस्था है

अथ प्रकृतीका ज्ञान ॥

मध्यसात्म्यश्च स्थूलः स्याद्बलवान् सत्त्ववान्नरः ॥
सचाऽप्युत्तमसात्म्यः स्याद्बलवत्समुपाचरेत् ॥१५॥

मध्य प्रकृतिवालाहो और स्थूलहो बलवालाहो सत्ववालाहो ऐसाभी मनुष्य उत्तम प्रकृतिवाला होता है पीछे यह मनुष्य अच्छे २ उपचार करे ॥ १५ ॥

अथ वातादिप्रकृतयः ॥

अथातः संप्रवक्ष्यामि प्रकृतिज्ञानमुत्तमम् ॥
वातिकं पैत्तिकं चैव श्लैष्मिकं सान्निपातिकम्॥१६॥

इसके अनंतर उत्तमरूपी प्रकृतिज्ञानको कहताहूं वातिक अर्थात् वातकी प्रकृति पैत्तिक अर्थात् पित्तकी प्रकृति श्लैष्मिक अर्थात् कफकी प्रकृति सान्निपातिक अर्थात् सन्निपातकी प्रकृति ऐसे है ॥ १६ ॥

अथ वातप्रकृतिलक्षणम् ॥

यः कृष्णवर्णश्चपलोऽतिसूक्ष्मः केशाल्परूक्षो बलवान् क्षमः स्यात् ॥ सूक्ष्मातिदन्तो नखवृद्धिमेति दीर्घस्वनश्चङ्क्रमणक्षमोऽसौ ॥ १७ ॥ दीर्घाक्रमो लोलुपहीनसत्त्वस्तथैव चाम्लीरसभोजनेच्छुः॥संस्वेदनेनातिविमर्दनेन सौख्यं समागच्छति वातलो नरः ॥ १८ ॥

**अथ वातकी प्रकृतिका लक्षण**—जो कृष्णवर्णवालाहो चपलहो अतिकृश शरीरवाला हो अल्पबालोंवालाहो रूपाहो बलवालाहो समर्थहो अतिसूक्ष्म दंतोंवालाहो और नखोंकी वृद्धिको प्राप्त होवै बडा और लंबा बोलनेवालाहो चलनेफिरनेमें समर्थ हो ॥ १७ ॥ और बहुत कूदनेवालाहो लोभीहो सत्वसे वर्जितहो और खट्टे रसको खानेकी इच्छावालाहो और अच्छीतरह पसीना देनेसे तथा मर्दन करनेसे सुखको प्राप्त होवै ऐसा मनुष्य वात-ला े ॥ १८ ॥

अथ पित्तप्रकृतिलक्षणम् ॥

गौरातिपिङ्गः सुकुमारमूर्त्तिः प्रीतः सुशीतो मधुपिङ्गनेत्रः ॥ तीक्ष्णोऽपि कोऽपि क्षणभङ्गुरश्च त्रासी मृदुर्गात्रमलोमकं स्यात् ॥ १९ ॥ गौल्य प्रियस्तिक्तरसानुभोजी द्वेषी च तीक्ष्णे च नवोष्णसेवी ॥ स्तुतिप्रियो दन्तविशुद्धवर्णो जातः सपित्तप्रकृतिर्मनुष्यः ॥ २० ॥

अथ पित्तकी प्रकृतिका लक्षण—गौरवर्णवालाहो अति पिंगवर्णसे संयुक्तहो और सुकुमार मूर्तिवालाहो प्रीतिवालाहो शीतल पदार्थको चाहनेवालाहो मधसरीखे तथा पिंगवर्णके नेत्रोंवालाहो तेज स्वभाववालाहो और कोईक क्षणभंगुरभीहो उद्वेगसे संयुक्तहो कोमलहो शरीरमें केश वहोतनहीं हो ॥ १९ ॥ और चंचलपनेमें प्रियता करनेवाला हो कडुआ रसको खानेवालाहो वैर करनेवालाहो तेजसे संयुक्तहो नवीन और गर्म वस्तुको सेवनेवालाहो अपनी स्तुतिको चाहनेवालाहो दंतोंसे विशेष करकै शुद्धवर्णवालाहो ऐसा मनुष्य पित्तकी प्रकृतिवाला होता है ॥ २० ॥

अथ कफप्रकृतिलक्षणम्॥

सुस्निग्धवर्णः सितनेत्रतृप्तः श्यामः सुकेशो नखदीर्घरोमा ॥ गम्भीरशब्दः श्रुतशास्त्रनिद्रातन्द्राप्रियस्तिक्तकटूष्णभोजी ॥ २१ ॥ स मांसलः स्निग्धरसप्रियश्च सगीतवाद्योऽतिसहिष्णुशीतः ॥ व्यायामशीलो रतलालसोऽसौ भवेत् कफस्य प्रकृतिर्मनुष्यः ॥ २२ ॥

अथ कफकी प्रकृतिका लक्षण—सुंदर स्निग्ध वर्णवालाहो और सपेद नेत्रोंसे तृप्तहो श्यामवर्णवालाहो सुंदर वालोंवालाहो लंबे नख और रोमोंसे संयुक्तहो गंभीर बोलनेवालाहो और वेद, शास्त्र, नींद, तंद्रा, इन्होंमें प्यार करमेवालाहो कडुआ और चर्चराको भोजन करनेवालाहो ॥ २१ ॥ और मोटाहो स्निग्धरसको चाहनेवालाहो गीत और वाजेको पसंद करनेवालाहो अतिसहनेमें शीलस्वभाववालाहो कसरतको करनेवालाहो विषयभोगमें इच्छावालाहो ऐसा मनुष्य कफकी प्रकृतिवाला होता है ॥ २२ ॥

अथ समप्रकृतिलक्षणम्॥

संमिश्रवर्णोऽतिसुदीप्तगात्रो गम्भीरधीरोऽतिविदीर्णरोमा ॥
रामाप्रियो भारसहोऽतिमिश्रो भोगेन युक्तः समता प्रकृत्याः ॥ २३॥

कई प्रकारसे मिलेहुये वर्णवाला और अतिसुंदर प्रकाशित आंगोंवाला और गंभीरप-

नेमें धीर और अति विदारितहुये रोमोंवाला और स्त्रीसे प्यार करनेवाला और भार अर्थात् बोझाको सहनेवाला और सब लक्षणोंसे अति मिलाहुआ और भोगको भोगनेवाला ऐसा मनुष्य समप्रकृतिवाला होता है ॥ २३ ॥

अथ दिशाभेदेन वातगुणदोषाः ॥

पूर्वदिशाका वायु ॥

अथान्तरं वच्मि मरुत्प्रवाहं पूर्वं तथा पश्चिमदक्षिणोत्तरम् ॥ तेषां गुणान् दोषविकोपनं च पृथक्पृथक्के गदतः शृणु त्वम् ॥ २४ ॥ शीतोऽतिमाधुर्य्यगुणः प्रयुक्तो वातप्रकोपी बलकृद्विशेषात् ॥ वाताधिकानां व्रणशोफिनाञ्च प्राचीप्रवृत्तः पवनो न शस्तः ॥ २५ ॥

अथ आठ दिशाओंमें प्रवृत्तहुआ वायुके गुणदोषवर्णन—इसके अनंतर वायुके प्रवाहको कहताहूं पूर्व—पश्चिम—दक्षिण—उत्तर—इनदिशाओंके वायुके गुण—दोप—कोप- इन्होंको कहतेहुये मेरेसे पृथक् २ सुन ॥ २४ ॥ शीतल स्वभाववाला और अतिमधुरपनाके गुणोंसे युक्त और वातको कोपनेवाला और विशेप करके बलको करनेवाला ऐसा पूर्वदि- शाका वायु है यह वातकी अधिकतावालोंको और घावपै शोजावालोंको श्रेष्ठ नहीं है२५

आग्नेयदिशाका वायु ॥

किञ्चिद्रसतिक्तो मधुरान्वितः स्यात् कफः समीरोद्भवरोगकारी ॥
सुशीतलः शोफवतां व्रणानां शस्तो न चाग्नेयसमीरणश्च॥२६॥

कछुक कडुआहो मधुररससे अन्वित है कफ और वातसे उपजे रोगोंका करताहै सुंदर शीतल है शोजावाले घावोंको अच्छा नहीं है ऐसा अग्निदिशाका वायु है ॥ २६ ॥

दक्षिणदिशाका वायु ॥

तिक्तः कषायो मधुरातिमन्दः सुगन्धसंशीतगुणैः प्रकृष्टः ॥ वदन्ति संज्ञां मलयानिलेति प्रकृष्टरामाजनचित्तहारी ॥ २७ ॥ मनोभवस्य प्रकरो मरुत्स्यात्कफोद्भवः सम्भवति प्रचारः ॥ न चातिशीतो न तथोष्णको वा शुभश्च याम्यां प्रभवः समीरः ॥ २८ ॥

कडुआ हो कसैलाहो मधुररससे अतिमंद है और सुगंध तथा शीतल गुणोंकरकै संयुक्तहो और मलयानिलसंज्ञावालाहो यह स्त्रियोंके चित्तको हरता है ॥२७॥ और कामदेवको जगाताहो कफके रोगोंको करताहो और अतिशीतल नहीं हो और अतिगर्म नहीं हो और शुभ हो ऐसा दक्षिणदिशाका वायु है ॥ २८ ॥

नैर्ऋत्यदिशाका वायु ॥

रूक्षोष्णवातः प्रथमः समीरः कट्वम्लपित्तासृजि दोषकारी ॥
प्रशोषणो देहबलस्य वायुः कफान्वितो नैर्ऋतिकः समीरः ॥ २९ ॥

रूषाहो और गर्मवायुसे संयुक्तहो और वायुको शांत करताहो और कटु, अम्ल, पित्त, रक्त, इन्होंमें दोषको करताहो और देहके बलको शोषनेवालाहो और कफसे अन्वितहो ऐसा नैर्ऋतदिशाका वायु होता है ॥ २९ ॥

पश्चिमदिशाका वायु ॥

अथातिसूक्ष्मो मरुतः प्रशस्तो नूनं प्रतीच्यास्तु दिशः प्रवृत्तः ॥
वायुस्तथोदीरति रक्तपित्तं शस्तो व्रणानां कफशोफिनां वा ॥ ३० ॥

पश्चिमदिशाका अतिसूक्ष्म वायु श्रेष्ठ है और दक्षिणदिशाका वायु रक्तपित्तको बढाता है यह वायु घाववालोंको और कफसे उपजे शोजेवालेको श्रेष्ठ है ॥ ३० ॥

वायव्यदिशाका वायु ॥

वायव्यजातो मरुतः प्रशस्तः कषायसंशुष्कगुणप्रसन्नः ॥
करोति वातस्य वशं नराणां शस्तो न निन्द्यो व्रणशोफिनाञ्च॥३१ ॥

वायव्यदिशाका वायु श्रेष्ठ है कसैला और अति सूखा गुणसे संपन्न है और मनुष्योंको हवाके वशमें करता है और घावपै शोजावालोंको श्रेष्ठ है और निंदित नहीं है ॥ ३१ ॥

उत्तरदिशाका वायु ॥

स्वादुः कषायश्च कफप्रकोपी वायुः कुबेरस्य दिशः प्रवृत्तः ॥
करोति मेघागमनं जलस्य शीतो न चोष्णो न च निन्द्य एषः ॥३२॥

उत्तर दिशाका वायु सजल मेघको लाता है शीतल है गर्म नहीं है कसैला है स्वादु है कफको कोपता है यह निंदाके योग्य नहीं है ॥ ३२ ॥

ऐशानदिशाका वायु ॥

शीतोतिगौल्यः कफवातकोपं करोति चैशानदिशः प्रवृत्तः ॥
शस्तश्च नासौ व्रणशोफकासिनां क्षमस्तथा श्वासविकारिणाञ्च॥३३॥

ईशान दिशाका वायु शीतलहै चंचल है कफ और वातके कोपको करता है और घाव–शोजा–खांसी–क्षय–श्वास रोग–इनविकारवालोंको अच्छा नहीं है ॥ ३३ ॥

अन्यपंचविधवायुगुणः ॥

वस्त्रं नानाविधं चर्म वैणवं तालव्यजनम् ॥
उशीरं शिखिपिच्छन्तु प्रत्येकेन गुणोत्तमाः ॥ ३४ ॥

अथ वस्त्रआदिके वायुका गुणदोषकथन—अनेक प्रकारका वस्त्र, चाम, बांसका पंखा, ताडका पंखा, खसकी टट्टी अथवा पंखा, मोरके पंखोंका पंखा, ये सब हवाके करनेमें एक एक करकै गुणोंमें उत्तम है ॥ ३४ ॥

वस्त्रवायुगुणः ॥

वस्त्रप्रवृत्तो मरुतो न शस्तो व्रणशोफिनाम्॥रक्तवासःसमुत्पन्नं विशेषेण तु वर्जयेत् ॥३५॥ करोति कफरक्तस्य कोपनं बहुरोगकृत् ॥ श्रमग्लानिपिपासासु तन्द्रानिद्राकरो भृशम् ॥ ३६ ॥

वस्त्रकी हवा घावपै शोजावालेको अच्छी नहीं है और लाल वस्त्रसे उपजी हुई हवाको विशेष करकै त्यागै॥३५॥क्योंकि लाल वस्त्रकी हवा कफ रक्तको कुपित करती है और बहुतसे रोगोंको उपजाती है और परिश्रम ग्लानि-पिपासा-तंद्रा-नींद-इन्होंको अति करतीहै ॥३६॥

वेणुवायुगुणः ॥

वैणवं व्यजनं तन्द्रानिद्राकरणमेव च ॥ रूक्षोऽतिकषायरसो न च वातप्रकोपनः ॥ ३७ ॥

बांसका पंखा तंद्रा और नींदको करता है रूषा है अतिकसैला रसवाला है और वातको कोपित नहीं करता है ॥ ३७ ॥

कांस्यपात्रवायुगुणः॥

कांस्यपात्रमरुद्रूक्षः सोष्णो वातस्य शान्तिकृत् ॥ दाहश्रमघ्नः स्वेदघ्नो निद्रासौख्यकरो नृणाम् ॥ ३८ ॥

कांस्यपात्रकी हवा रूखी है गर्म है वातको शांत करती है दाह और श्रमको हरती है और मनुष्योंके नींद और सुखको करती है ॥ ३८ ॥

तालपत्रवायुगुणः ॥

तालपत्रकरम्भाया दलस्य व्यजनो हिमः॥ मधुरोऽतिश्रमघ्नः स्यादार्द्रत्वात्कफकोपनः ॥ ३९ ॥ निद्राकरः प्रीतिकरः शोकरोगविकारहा ॥ दाहपित्तश्रमग्लानिनाशनो भ्रमशान्तिकृत् ॥ ४० ॥

ताडका पत्ता और केलाका पत्ताका पंखाकी हवा शीतल है मधुर है . श्रमको हरती है और गीलेपनेसे कफको कोपती है ॥ ३९ ॥ और नींदको करती है प्रीतिको करती है शोक, रोग, विकार इन्होंको नाशती है और दाह, पित्त, परिश्रम, ग्लानि, इन्होंको नाशती है और भ्रमकी शांतिको करती है ॥ ४० ॥

## व्यजनवायुगुणः ॥

उशीरमूलरचितं व्यजनं शिखिपिच्छकैः ॥ व्यजनेन सुगन्धः स्यान्मन्दशीतगुणात्मकः ॥ ४१ ॥ ग्लानिमूर्च्छाभ्रमशोषविसर्पविषदर्पहा ॥ इति पञ्चविधो वायुरुपायेन कृतो नृणाम् ॥ ४२ ॥

खसकी जडसे और मोरके पंखोंसे रचाहुआ पंखाकी हवा सुगंधको देती हैं कछुक शीत गुणवाली है ॥ ४१ ॥ और ग्लानि–मूर्च्छा–भ्रम–शोष–विसर्प–विष–इन्होंको नाशती है ऐसे मनुष्योंके लिये उपायसे कियाहुआ वायु पांचप्रकारका है ॥ ४२ ॥

## षड्तुओंमें वायुदिशा ॥

शिशिरे पूर्वकृद्वायुराग्नेयो हेमन्ते मरुत् ॥ वसन्ते दक्षिणो वायुर्ग्रीष्मे नैर्ऋत्यकस्तथा ॥ ४३ ॥ वर्षासु पश्चिमो वायुर्वायव्यः शरदि स्मृतः ॥ शिशिरे च हेमन्ते च कथितश्चोत्तरोऽनिलः ॥ ४४ ॥

शिशिर अर्थात् माघ फाल्गुनमें पूर्वका वायु अच्छा है हेमंत अर्थात् मृगशिर पौषमें अग्निदिशाका वायु अच्छा है वसंत अर्थात् चैत्र वैशाखमें दक्षिणका वायु अच्छा है ग्रीष्म अर्थात् ज्येष्ठ आषाढमें नैर्ऋतका वायु अच्छा है ॥ ४३ ॥ वर्षा अर्थात् श्रावण भादुओंमें पश्चिमका वायु अच्छा है शरद अर्थात् आश्विन कार्तिकमें वायव्यदिशाका वायु अच्छा है शिशिर और वसंतऋतुमें उत्तरका वायुभी अच्छा है ॥ ४४ ॥

## दिनमें षड्तूओंके उपचार ॥

अपराह्णे वर्षा वदन्ति निपुणास्तस्मिन्निशीथे शरत् प्रोक्तः शैशिरिकस्ततो हिमऋतुः सूर्योदयादग्रतः ॥ मध्याह्ने च तथा वदन्ति निपुणा ग्रीष्मो ऋतुः स्यात्ततो वासन्तः कथितो ऋतुस्तु मुनिभिः पूर्वापराह्णे सदा ॥ ४५ ॥

दिनके तीसरे पहरमें वर्षाऋतु होता है अर्द्ध रात्रिमें शरदृऋतु होता है और आधीरातके पीछे शिशिर ऋतु होता है सूर्यके उदयके समय हेमंतऋतु होता है दुपहरके स ग्रीष्मऋतु होता है दिनके पूर्वभागमें वसंतऋतु होता है ॥ ४५ ॥

अथ सविषवायुः ॥

कार्तिके मार्गशीर्षे वा माघे चाषाढसंज्ञके ॥
ऋतुसन्धौ च हेमन्ते सविषः स्यात्तु मारुतः ॥ ४६ ॥

कार्तिक, मार्गशीर्ष, माघ, आषाढ, इन्होंमें, और छःऋतुओंके संधिमें तथा हेमंतऋतुमें वायु सविष होता है ॥ ४६ ॥

स यस्मिन्नगरे देशे ग्रामे वा नगरेऽपि वा ॥ संस्पृशेदुल्बणो वायुर्गोमनुष्येभवाजिनाम् ॥ ४७ ॥ तिलकं गोषु जानीयाद्यक्ष्माणं मानुषेषु च ॥ गजेषु पावकं विद्याद्धयानां वेद्य उच्यते ॥ ४८ ॥

जिस नगरमें जिस देशमें अथवा जिस गाममें दारुणरूप विगडाहुआ वायु जब गाय—मनुष्य—हस्ती—घोडा—इन्होंको छुहता है ॥ ४७ ॥ तब गायेंमें तिलक उपजता है और मनुष्योंमें राजरोग उपजता है और हस्तियोंमें पावक अर्थात् अग्नि उपजता है और घोडोंमें पीडा उपजती है ॥ ४८ ॥

रक्षणीयं गजे पित्तं श्लेष्मा वाजिषु सर्वदा ॥
पवनोऽयं मनुष्याणां प्रायो रक्षेत सर्वदा ॥ ४९ ॥

कुशल वैद्यनें हस्तीमें पित्तकी रक्षा करनी और घोडोंमें सबकाल कफकी रक्षा करनी और सबकालमें विशेष करके मनुष्योंमें वायूकी रक्षा करनी ॥ ४९ ॥

अथ दोषोंके वायुकोपका उपशम ॥

वर्षावायुः कुप्यतेऽन्तःशरत्सु लीनो वायुः कुप्यते पित्तरोगे ॥ लीयेत्पित्तं शैशिरे श्लेष्मकुञ्जे हेमन्ते वा चीयमानस्तथापि ॥ ५० ॥ कोपं याति श्लेष्मरोगो वसन्ते तस्माच्छान्तिः श्लेष्मरोगस्य चोष्णे ॥ पित्तं यायात्कोपितां ग्रीष्मकाले दृष्टा शान्तिः पैत्तिकी वार्षिके च ॥ ५१ ॥

वर्षाऋतुमें वायु कोपता है और शरद्ऋतुमें पित्तरोगमें भीतर कुपितहुआ कुपित होताहै शिशिरऋतुमें कफके समूहमें पित्त लीन हो जाता है अथवा हेमंतऋतुमें संचितहुआ पित्त शिशिरऋतुमें लीन हो जाता है ॥ ५० ॥ वसंतऋतुमें कफका रोग कोपको प्राप्त होता है त्वात्से गर्मसमयमें कफके रोगकी शांति होती है और ग्रीष्मऋतुमें पित्त कोपको प्राप्त और वर्षाऋतुमें पित्तकी शांति देखी है ॥ ५१ ॥

## अथ वायुका कोप ॥

अधोवातमूत्रपुरीषस्य रोधात् कषायातिशीतान्निशाजागरेषु ॥ व्यवायेऽथवाहःश्रमाद्वातिभुक्त्याध्वनि प्रायशो भाषणेनातिभीत्या ॥ ५२ ॥ विरूक्षैरतिक्षारतिक्तैः कटूभिस्तथा यानदोलाश्वकोष्ट्रे रथे वा ॥ खरे कुञ्जरे मन्दिरारोहणेनोपवासे भवेन्मारुतस्य प्रकोपः ॥ ५३ ॥ शीते दिने दुर्दिने स्नानपीतेऽपराह्ने निशाजागरे वासरे वा ॥ वर्षासु वै केवलं याति कोपं मरुत्सेवितो याति भुक्तस्य जीर्णम् ॥ ५४ ॥ मसूराः कलायाश्च निष्पावकाश्च महामाषशुभ्रा यवाश्चामलाः स्युः ॥ महाचावलाःकृष्णकान्याप्रदिष्टा हिमाः कङ्गुनीवाररक्ताश्च शाल्यः॥५५॥तथा कोरदूषकः श्यामाक एतैः कृतं चौदनं वा यवागूश्र्तं वा ॥ कलिङ्गानि वास्तूकचिल्लीकपूतीपलाण्डुस्तथा गृञ्जनं कन्दशाकम् ॥ ५६ ॥ इमान् सेवितात्यर्थमेति प्रकोपं समीरस्य चोक्तः सुरासम्भवस्तु ॥ ततो यत्नतो रक्षणीयं मनुष्यैः शुभं चेहसे त्वं सदा रोगशान्तिम् ॥ ५७ ॥

अधोवात—मूत्र—विष्ठा—थूकआदिके रोकनेसे कसैला और शीतल पदार्थको सेवनेसे और रात्रिमें जागनेसे मैथुनके करनेसे नित्यप्रति श्रम करनेसे अति भोजनको खानेसे और मार्गमें अति चलनेसे ज्यादे बोलनेसे अति भयसे ॥ ५२ ॥ और रूखे पदार्थसे और अत्यंतसर—कडुआ—चर्चरा—इन्होंसे और डोला अर्थात् पिन्नस—घोडा, ऊंठ, रथ, गधा, हस्ती इन्होंपै चढनेसे अथवा स्थानमेंही रहनेसे वायुका प्रकोप होता है॥ ५३ ॥ और शीतल दिनमें और मेघआदिसे आच्छादितहुये दुर्दिनमें और दुपहरके पीछे स्नान करनेसे तथा प्रथम पान करनेसे और रात्रिके जागनेमें और वर्षाऋतुमें दिनमें वायु कोपको प्राप्त होता है और सेवित किया वायु कियेहुये भोजनको जराता है॥ ५४ ॥ मसूर, मठर, मोठ, चौला, जुवार, जव, मोठेचावल, कृष्णअन्न, [illegible] लअन्न, कांगनी, नीवार धान्य, लालअन्न, तूरीअन्न, ॥ ५५ ॥ कोदूअन्न, शामक, कि[illegible] चावल अर्थात् सेंई—गुडयाणीमें बनाये चावल—इंद्रजव—थुवा,—चाकवत अर्थात् वथु वेर विशेष, प्याज, गाजर, कंदशाक ॥ ५६ ॥ इन्होंको ज्यादे सेवनेसे वायुका प्रकोप हो[illegible] है इसवास्ते मनुष्योंने जतनसे वायुकी रक्षा करनी और हे पुत्र! जो तू सब कालमें शुभ और रोगकी [illegible] चाहता है वायुकी रक्षा करता रह ॥ ५७ ॥

## अथ पित्तप्रकोपनिदानम् ॥

अत्युष्णकट्वम्लरूक्षैर्विदाहे ससैन्धवसुरासेवनेनोपवासैः॥घर्मेण क्रोधेन वा स्वेदनेन व्यवायेन वा याति कोपश्च पित्तम्॥५८॥कुलित्थाढकीयूषमूला कशिग्रुशठीसर्षपाराजिकाशाकमेव ॥ निशाजागरेणापि युद्धे श्रमे वा घनान्ते शरत्सु प्रकोपः प्रदिष्टः॥५९॥ अम्लेन वापि चोष्णकाले शरत्सु भृशं वासरे मध्यमे वा निशीथे ॥ जीर्णे रसे भुक्तमात्रे प्रकोपः प्रदिष्टो विदैः कोविदैः पैत्तिकः स्यात् ॥ ६० ॥

अतिगर्म, चर्चरा, खट्टा, रूखा, इन्होंको सेवनेसे और दाहमें सेंधानमकसहित मदिराको सेवनेसे गर्मीमें और क्रोधमें पसीने और भोग करनेसे पित्त कोपको प्राप्त होता है ॥ ५८ ॥ कुलथी, और अरहरका यूप और मूली, सहोंजना, कचूर, सरसों, राई, इन्होंका शाक अथवा इन्होंसे संयुक्त शाकको खाना और वर्षाऋतुमें रात्रिका जागना युद्ध करना–परिश्रम करना–इन्होंसे शरदृऋतुमें पित्त कोपको प्राप्त होता है ॥ ५९ ॥ खट्टे पदार्थसे और गर्मसमयमें और अतिशय करकै दिनके मध्यभागमें और अर्ध रात्रिमें और जीर्णरसको खानेसे शरदृऋतुमें पित्तका प्रकोप होता है ॥ ६० ॥

## अथ कफप्रकोपनिदानम्॥

निशाजागरे वासरे वातिनिद्रा सुशीतोदसंसेवने शीतले वा ॥ पयःपान पीयूषमिक्षुस्तिलैस्तु तथा गृञ्जनैः कन्दशाकैरथापि ॥ ६१ ॥ सदा सेवितैर्वास्तुकैश्चाणुमत्स्यैर्दधिपिच्छिलैर्माषमद्यैर्गुरूभिः ॥ अतिस्निग्धसंसेवनैर्भोजनेषु प्रदिष्टः कफस्य प्रकोपो वसन्ते ॥ ६२ ॥ दिनान्ते प्रभाते निशान्ते नरस्य प्रकोपः प्रदिष्टोपि भुङ्क्ते न जीर्णे॥ प्रदिष्टो बुधैः कोविदैरेव रोगः कफोत्पत्ति जानीहि कष्टप्रयुक्ताम् ॥ ६३ ॥ सशीतेऽथवा शीतकाले निशान्ते नरस्य प्रकोपः प्रदिष्टोऽपि भुक्तेः ॥ न जीर्णे प्रदिष्टो बुधै रोगवेगो निमता कफस्येति चोक्तं सुधीभिः ॥६४॥

रात्रिमें जागनेसे और दिनमें अति शयन करनेसे और सुंदर शीतल पानीको तथा शीतल देशको सेवनेसे और दूध–नवीन व्याई गायका दूध–ईख–तिल, गाजर, कंदशाक इन्होंको सेवनेसे ॥ ६१ ॥ और बकराके अंडे तथा मछलीको सदा सेवनेसे और दही–पिच्छिल पदार्थ–उडद–मदिरा–भारे पदार्थ–अतिचिकना पदार्थ–इन्होंको सेवनेसे वसंतमें

दुष्टहुये कफका कोप होता है ॥ ६२ ॥ दिनके अंतमें–प्रभातमें–रात्रीके अंतमें–भोजनकिये अन्नको नहीं जीर्ण होनेमें कफका कोप होता है ऐसे कफकी उत्पत्तिको कष्टसाध्य जानो ॥ ६३ ॥ शीतल देशमें–शीतल समयमें–रात्रिके अंतमें–भोजनको नहीं जीर्ण होनेमें–मनुष्यके कफका प्रकोप बुद्धिमानोंनें कहा है ॥ ६४ ॥

## अथ दोदोषोंके कोपकी उत्पत्ति ॥

यदा विपर्य्यासगते ऋतौ च प्रकोपनं यस्य यथा प्रदिष्टम् ॥ तत्सेवमानस्य नरस्य रोगः स्याद्द्वन्द्वजो नाम विकारकारी ॥ ६५ ॥ यस्मिन्नृतौ वातविकोप उक्तस्तस्मिन्यदि श्लेष्मविकोपनानि ॥ संसेवते वा मनुजस्तदास्य भवेत्प्रकोपः कफपित्तयोश्च ॥ ६६ ॥ यस्मिन्मरुत्कुप्यति सेवते यः पित्तस्य कोपप्रकराणि यानि ॥ विपर्य्ययो वा ऋतुधान्ययोश्च स पित्तवातप्रभवस्तदा स्यात् ॥ ६७ ॥

जब विपरीतपनेको ऋतु प्राप्त हो जावे तब जिसका कोप जैसें कहा है तिसको सेवनेवाले मनुष्यके द्वंद्वज अर्थात् दोदोषोंसे उपजा रोग उत्पन्न होता है ॥ ६५ ॥ जिस ऋतुमें वायुका कोप कहा है तिसहीऋतुमें जो कफको कुपितकरनेंवाले पदार्थोंको मनुष्य सेवै तब तिस मनुष्यके कफका और पित्तका कोप होता है ॥ ६६ ॥ जिस ऋतुमें वायु कोपता है तिस ऋतुमें पित्तको कुपित करनेंवाले पदार्थोंको सेवै अथवा ऋतुका और ऋतुके योग्य अन्नका विपरीतपना होवै तब पित्त वातसे उपजा रोग होता है ॥ ६७ ॥

## अथ सन्निपातकी उत्पत्ति ॥

विपर्य्यासागते काले रसे विपरिसेविते ॥ तदा स्यात्सन्निपातो हि रोगोपद्रवकारकः ॥ ६८ ॥ इति आत्रेयभाषिते हारीतोत्तरे दोषप्रकोपो नाम पञ्चमोऽध्यायः ॥ ५ ॥

जब काल विपरीतपनेसे वर्तै और रसभी विपरीतपनेसे सेवित कियाजावै तब सन्निपात उपजता है यह रोगमें उपद्रव करता है ॥ ६८ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्रिअनुवादितहारीतसंहिताभाषायां प्रथमस्थाने दोषप्रकोपो नाम पंचमोऽध्यायः ॥ ५ ॥

---

षष्ठोऽध्यायः ॥६

अथ रसोंके गुणदोषका वर्णन ॥

अथातः संप्रवक्ष्यामि रसानाञ्च गुणागुणान् ॥
येन विज्ञानमात्रेण रसानां गुणंविद्भवेत् ॥ १ ॥

इसके अनंतर रसोंके गुण और दोषको कहताहूं जिसको जाननेसे रसोंके गुणको जाननेवाला होवै ॥ १ ॥

छःरस ॥

मधुरः कषायस्तिक्तोम्लकश्च क्षारः कटुः षड्रसनामधेयम् ॥
द्वयं द्वयं वातकफप्रकोपनं द्वयं तथा पित्तकरं वदन्ति ॥ २ ॥

मधुर, कसैला, कडुआ, खट्टा, खारा, चर्चरा, ऐसे छः प्रकारके रस हैं इन्होंमें दो दो रस वात और कफको कोपते हैं और दो रस पित्तको करते हैं ॥ २ ॥

षड्रसगुणदोषवर्णनम् ॥

क्षारः कषायः पवनः प्रकोपी मधुरोऽथ तिक्तः कफकोपनश्च ॥ कट्वम्लकौ पित्तविकारकारिणौ कट्वम्लकौ वातशमौ प्रदिष्टौ ॥ ३ ॥ पित्तस्य नाशी मधुरः सतिक्तः कटूकषायौ शमनौ कफस्य ॥ अन्योन्यमेतच्छमनं वदन्ति परस्परं दोषविवृद्धिमन्तः ॥ ४ ॥

खारा और कसैला रस वायुको कोपता हैं मधुर और कडुआ रस कफको कोपता है चर्चरा और खट्टा रस पित्तके विकारको करता है और वातको शांत करता है ॥ ३ ॥ मधुर और कडुआ रस पित्तको नाशता है चर्चरा और कसैला रस कफको शांत करता है आपसमें दोषकी विवृद्धिवाले आपसमें मिश्रितहुये शमनको कहते हैं ॥ ४ ॥

अथ रसगुणोंके गुणकर ॥

मधुरकटुकावन्योन्यस्य प्रकर्षविधायिनौ लवणवियुतोऽम्लीकः प्रोक्तो विशेषरसानुगः ॥ अविकृतरस्तथा तिक्तैर्युक्तः कषायरसो लघुर्भवति सुतरां स्वादुःश्रेष्ठो गुणं प्रकरोति वै ॥ ५ ॥

मधुर और चर्चरा रस आपसके प्रकर्षको करते हैं नमकसे विशेष करकै युक्तहुआ खट्टा रस विशेष रसके पश्चात् गमन करता है नहीं विकारको प्राप्तहुआ और कडुआ रससे युक्तहुआ ऐसा कसैला रस हलका होता है और अच्छीतरह स्वादु रस सेवितकिया जावै तो गुणको करता है ॥ ५ ॥

## वातादिविरुद्धरस ॥

कट्वतिक्तकषायाश्च कोपयन्ति समीरणम् ॥
कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम् ॥ ६ ॥

चर्चरा, कडुआ, कसैला, ये रस वायुको कोपते हैं चर्चरा, खट्टा, सलोना, ये रस पित्तको कोपते हैं मधुर, खट्टा, सलोना, ये रस कफको कोपते है ॥ ६ ॥

## दोषोंके विरोधी रसोंका वर्णन ॥

समीरणे तु नो देयाः कटुतिक्तकषायकाः ॥
पित्ते कट्वम्ललवणाः स्वाद्वम्ललवणाः कफे ॥ ७ ॥

चर्चरा, कडुआ, कसैला ये रस वायुमें नहीं देने चाहिये चर्चरा, खट्टा, सलोना, ये रस पित्तमें नहीं देने चाहिये मधुर, खट्टा, सलोना, ये रस कफमें नहीं देने चाहिये ॥ ७ ॥

## वातादिकोमें रसयोजना ॥

स्वाद्वम्ललवणान्वीते तिक्तस्वादुकषायकान्॥
पित्तेकफे तिक्तकटुकषायान् योजयेद्रसान् ॥ ८ ॥

मधुराम्लौ क्षारकटुकौ तिक्तकषायकौ चेत्येतावन्योन्यरसविरोधिनौ भवेताम् ॥

वायुमें मधुर, खट्टा, सलोना, ये रस युक्त करने पित्तमें चर्चरा, कडुआ, कसैला, ये रस युक्त करने कफमें मधुर, खट्टा, सलोना, ये रसयुक्त करने ॥ ८ ॥ मधुर रस और खट्टा रस विरोधी है खारा और चर्चरा रस विरोधी है कडुआ और चर्चरा रस विरोधी है ॥

## अथ मधुर रसके वीर्य्यका वर्णन ॥

यः स्वादुः श्रमशोषहारिबलकृद्वीर्य्यप्रदः पुष्टिदः प्रह्लादं रसने करोति तदनु श्लेष्मप्रवृद्धिं ततः ॥ पित्तानां दमनः श्रमोपशमनो वृष्यो नराणां हितः क्षीणानां क्षतपाण्डुनेत्ररुजसंहर्त्ता भवेन्माधुरः ॥ ९ ॥

जो स्वादुहो श्रम और शोषको हरताहो बलको करताहो वीर्य्यको देनेंवालाहो पुष्टिको देताहो आनंदको देताहो जीभमें कफकी वृद्धिको करताहो पित्तको हरताहो परिश्रमको शांत करताहो मनुष्योंको पुष्ट करताहो क्षीणमनुष्योंके कल्याण करनेंवालाहो और घाव-पांडुरोग-नेत्ररोग-इन्होंको हरताहो तिसको मधुर रस कहतेहैं ॥ ९ ॥

अथ कडुआरसके वीर्यका वर्णन ॥

यस्तिक्तः कफवायुसंहृतिकरः कुष्ठादिदोषापहः शीतः सर्वरुजापहोभ्रमहरो रुच्यो न संक्लेदनः ॥ जिह्वास्फोटकनाशनोऽथ भवति क्षीणक्षतानां हितो वक्त्रोल्लासकरः प्रकृष्टकथितो निम्बादिकास्वादकृत् ॥ १० ॥

कडुआ रस कफवायुका संहार करता है कुष्ठआदि दोषको नाशता है शांतस्वरूप है सबरोगोंको हरता है भ्रमको हरता है रुचिमें हित है क्लेदको अच्छी तरह करता है और जीभकी फुन्सियोंको नाशता है क्षीण और घाववालोंको हित है मुखमें आनंदको करता है और नींबआदिके स्वादको करता है ॥ १० ॥

अथ रसके वीर्यका वर्णन ॥

नेत्रं स्रावयते मुखं विदहते कर्णस्य तापं वहन्वीभत्सं तनुते मुखं विकुरुते पित्तास्रजः कोपनम् ॥ अग्नीनव्युषते क्षतं विदहते जीर्णो न शस्तो भवेत् वातान्नाशयते कफञ्च दहते कटुको महारौद्रकः ॥ ११ ॥

चर्चरा रस नेत्रको झिराता है मुखको विशेष करके दग्ध करता है कानोंमें जालको प्राप्त करता है भयानकरूप मुखको करता हैं पित्तको और रक्तको कुपित करता है जठराग्नीको जगाता है क्षणमात्र दाहको करता है और पुराना चर्चरारस श्रेष्ठ नहीं होताहै वायुको नाशता है और कफको दग्ध करता है और अति दारुण रूप है ॥ ११ ॥

अथ खट्टारसके वीर्य्यका वर्णन ॥

जिह्वाक्लेदं जनयति तथा नेत्रनिर्म्मीलनं च वीभत्सं वा जनयति सदा वातरोगापहारी ॥ कण्डूकुष्ठक्षतरुजकरो नो हितः शोफिनः स्यादम्लः प्रोक्तो मरुतशमनोऽसृक्प्रकोपं तनोति ॥ १२ ॥

खट्टारस जीभमें क्लेदको करता है नेत्रोंको मीचता है सब कालमें भयानकपनेको उपजाता है वातके रोगको हरता है और खाज, कुष्ठ, घाव, इन्होंको उपजाता है शोजावालेको हित नहीं है वायुको शांत करता है रक्तके कोपको विस्तृत करता है ॥ १२ ॥

अथ कसैलारसके वीर्य्यका वर्णन ॥

जिह्वां कण्ठं ग्रसति नितरां ग्राहकश्चापि सारे श्लेष्मव्याधेरुपशमकरः श्वासकासापहर्त्ता ॥ हिक्काशूलं हरति नितरां शोधनः स्याद्व्रणानां प्रोक्तश्चा समधिकगुणः श्रेष्ठकाषायनामा ॥ १२ ॥

कसैलारस जीभको और कंठको ग्रसता है अतीसारको बंद करता है कफकी व्याधिको शांत करता है श्वासरोगको और खांसीको नाशता है हिचकीको और शूलको हरता है और घावोंको निरंतर शोधता है यह रस अधिक गुणोंवाला कहा है ॥ १३ ॥

अथ खारारसके वीर्य्यका वर्णन ॥

क्षारः क्लेदं जनयति मुखेऽस्वादुरुष्णो विदाही शूलश्लेष्मारुचिहरतृषा मूत्रकृच्छोषणश्च ॥ आमाहारं जनयति पुनर्वह्निसन्धुक्षणः स्याच्छ्रेष्ठः प्रोक्तःस हि रसमहान्सर्वतो योग्यभूतः ॥ १४ ॥ इति षड्रस वर्णनं नाम षष्ठोऽध्यायः॥६॥

खारारस मुखमें ग्लानीकों उपजाता है स्वादु नहीं है गर्म है विशेष करके दाहको करता है और शूल, कफ, अरुचि, तृषा, मूत्र इन्होंको करता है शोषनेवाला है वारंवार अफाराको उपजाता है जठराग्नीको जगाता है सब जगह योग्य नहीं है कहींक अच्छाभी है ॥ १४ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने षड्रस वर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः॥ ७ ॥

अथ पानीका वर्ग ॥

अथातः संप्रवक्ष्यामि पानीयानि पृथक्पृथक् ॥
श्रृणुध्वं च समासेन गुणान्गुणविपर्य्ययम् ॥ १ ॥

अब पानियोंको अलग २ कहताहूं पानियोंके गुण और दोषोंको सुनो ॥ १ ॥

जलभेद.

द्विविधं चोदकं प्रोक्तमान्तरिक्षं तथौद्भिदम् ॥ आन्तरिक्षं तु द्विविधं गाङ्गं सामुद्रिकं पयः ॥ २ ॥ तद्वच्चतुर्विधं प्रोक्तमन्तरिक्षसमुद्भवम् ॥ भूमौ निपतितं तच्च जातं चाष्टविधं जलम् ॥ ३ ॥ गाङ्गसामुद्रविज्ञानं कथयिष्यामि सांप्रतम् ॥ धारितं येन पात्रेण लक्ष्यते तेन तद्विधम् ॥४॥

पानी दो २ प्रकारका कहा है आंतरिक्ष अर्थात् आकाशका– दूसरा औद्भिद अर्थात् थिवीका और आंतरिक्ष पानीभी २ प्रकारका है एक गांग–दूसरा–सामुद्रिक–॥ २ ॥ तै

सोही आकाशसे उपजा पानी च्यारप्रकारका कहा है और पृथिवीमें पतितहुआ वही पानी आठ प्रकारका है ॥ ३ ॥ गांग और सामुद्रपानीके विज्ञानको अब कहताहूं जिस पात्र करके धारणकियाजावे तहां तिसीप्रकारसे दीखता है ॥ ४ ॥

## अथ गांगपानीकी परीक्षा ॥

धौतं शुद्धं सितं वस्त्रं चतुर्हस्तप्रमाणकम् ॥ दण्डास्त्रिहस्ताश्चत्वारश्चतुष्कोणेषु बन्धयेत् ॥ ५ ॥ तस्मात्परीक्ष्यं तत्तोयं शुद्धे रौप्यमयेऽथवा ॥ कांस्यपात्रे समुद्धृत्य परीक्षेत भिषग्वरः॥६॥ शुद्धकार्पासतूलं वा श्वेतशाल्योदनस्य वा ॥ पिण्डिका तत्समा क्षिप्ता श्वेततां याति सा पुनः ॥७॥ श्वेता तु निर्म्मला पिण्डी शुद्धश्च निर्मलं पयः ॥ तद्गाङ्गं सर्वदोषघ्नं गृहीताङ्गं सुभाजने ॥ ८ ॥

धोयाहुआ शुद्ध सपेद ऐसे वस्त्रको च्यारहाथप्रमाणसे ले पीछे तीनतीन हाथके दंडों च्यारकोणोंमें बंधवावे ॥ ५ ॥ तिस्से शुद्धहुये रूपेके पात्रमें तिस पानीकी परीक्षा करै अथवा कांसीके पात्रमें घाल परीक्षा करे ॥ ६ ॥ अथवा सपेद कपासकी जडको अथवा सपेदशालिचावलकी जड्को पीस पींडी बना तिस पानीमें गेरै जो फिर सपेदपनेको प्राप्त होवै॥७॥ और सपेदहोके वह पिंडी निर्मल होजावै और वह पानीभी निर्मल होजावे तिसको गांग पानी कहतेहैं वह गांगपानी सबदोषोंको हरता है परंतु इस पानीको सुंदर पात्रमें ॥ ८ ॥

## गंगाजलके गुण.

तद्धारयेच्च मतिमान्वल्यं मेध्यं रसायनम् ॥ श्रमक्लमपिपासाघ्नं कण्डूदोषनिवारणम् ॥ १९ ॥ लघु मूर्च्छातृषाच्छर्दिमूत्रस्तम्भविनाशनम् ॥ गङ्गोदकस्य वृष्टिः स्याद्दिवसे वा प्रदृश्यते ॥ १० ॥

बुद्धिमान् मनुष्य धारणकरै यह बलमें हितहै पवित्र है रसायन है और ग्लानि, परिश्रम, प्यास, इन्होंको हरता है खाजके दोषको दूर करता है ॥ ९ ॥ हलका है और मूर्च्छा, तृषा, छर्दि, मूत्रस्तंभ– इन्होंको नाशता है अथवा सूर्य्यके दीखतेहुये जो वर्षता है वह गांगपानी है ॥ १० ॥

## अथ सामुद्र पानीका लक्षण गुण दोष वर्णन ॥

नीलं घनं पीतमथापि च॥ सक्षारं पिच्छिलं चैव सामुद्रं

तन्निगद्यते ॥ ११ ॥ सघनं कफकृच्चैव कण्डूश्लीपदकारकम् ॥ सवातलं च विज्ञेयं रक्तदोषार्त्तिकारणम् ॥ १२ ॥

कालिसको लियेहो मलसे सहितहो नीलाहो मोठाहो पीलाहो खारसे संयुक्तहो आगोंसे युक्तहो तिसको सामुद्रपानी कहते हैं ॥ ११ ॥ यह कफको करता है खाज और श्लीपद रोगको उपजाता है वातल है रक्तके रोगोंको करता है ॥ १२ ॥

चारप्रकारकी वृष्टि ॥

द्विविधमुदकं प्रोक्तं तथा वक्ष्ये चतुर्विधम् ॥
रात्रिवृष्टिर्दिवावृष्टिर्दुर्दिनावीक्षणोद्भवा ॥ १३ ॥

पानी २ प्रकारका कहा है तथा ४ प्रकारकाभी कहेंगे रात्रिमें जो वर्षता है दिनमें जो वर्षताहै दुर्दिनमें जो वर्षताहै ॥ १३ ॥

अथ दुर्दिनमे वर्षाहुआ पानीके गुण दोष वर्णन ॥

निशाजलं कफकरं घनशीतगुणात्मकम् ॥
सामुद्रतोयस्य समं विज्ञेयं वातकोपनम् ॥ १४ ॥

रात्रिमें वर्षा पानी कफको करता है भारा है शीतलगुणोंवाला है सामुद्रसंज्ञक पानीके समान है और वातको कोपता है ॥ १४ ॥

अथ रात्रिको वर्षाहुआ पानीके गुण दोष वर्णन ॥

दिवा सूर्य्यांशुतप्ताश्च मेघा वर्षन्ति यत्पयः ॥
तत्कफघ्नं पिपासाघ्नं लघुवातप्रकोपनम् ॥ १५ ॥

दिनमें सूर्यके किरनोंसे तप्तहुये जो मेघ पानीको वर्षाते है वह कफको नाशता है प्यासको हरता है हलका है वातको कोपता है ॥ १५ ॥

अथ दिनमें वर्षाहुवा पानीके गुण दोष वर्णन ॥

दुर्दिने वृष्टिसन्तापं वातभूतं सवातलम् ॥
कफकृच्छोषहननं तर्पणं दोषकोपनम् ॥ १६ ॥

दुर्दिनमें वर्षाहुआ पानी वातल है कफको करता है शोषको हरता है तृप्तीको करता है दोषोंको कोपता है ॥ १६ ॥

क्षणवृष्टिके गुण ॥

तथा वा क्षणवृष्टिश्च दोषरोगकरी नृणाम् ॥

कण्डूत्रिदोषजननं पानीयं न प्रशस्यते ॥ १७ ॥

श्रावण महीनेमें जो क्षण २ में वृष्टि होती है वह वर्षा मनुष्योंके दोषको और रोगको करती है और इसका पानी खाजको और त्रिदोषको उपजाता है और अच्छा नहीं है ॥१७॥

श्रावणवृष्टिके गुण ॥

मेघा वमन्ति यत्तोयं सशैलवनकानने ॥
श्रावणे निन्द्यते भूमौ कराम्बु वर्षते रविः ॥ १८ ॥

श्रावणमें जो पानी वर्षता है वह पृथिवीमें निंदित है जो पर्वत वन वडा वन इन्होंमें मेघ पानीको वर्षाते है ॥ १८ ॥

अथ भादुवाके वृष्टिके गुण ॥

सघनं नाभसं नीरं श्लेष्मकृद्वातकोपनम् ॥
शमनं पित्तरोगाणां मधुरं रक्तदोषकृत् ॥ १९ ॥

भादुवाकी वर्षाका पानी मोठा है कफको करता है वातको कोपता है पित्तके रोगोंको शांत करता है मधुर है और रक्तदोषको करता है ॥ १९ ॥

अथ आश्विनके वृष्टिके गुण ॥

रूक्षं पित्तकरं चाम्लं गुल्मरक्तविकारकृत् ॥
चित्रानक्षत्रसम्भूतं खरं शस्यविदोषकृत् ॥ २० ॥

आश्विनमें हुई वर्षाका पानी रूखा है पित्तको करता है खट्टा है गुल्मको और रक्तके विकारको करता है चित्रानक्षत्रमें वर्षाहुआ पानी तेज है और खेतीके दोषको करता है ॥२०॥

अथ कार्तिकके वृष्टिके गुण ॥

कार्त्तिकीवृष्टिसम्भूतं स्वातिसन्तापशीतलम् ॥ नाशनं च त्रिदोषाणां सर्वशस्यप्रवर्द्धनम् ॥ २१ ॥ शीतलं वलकृद्धृष्यं त्रिदाहज्वरनाशनम् ॥

कार्तिकमें वर्षी हुई वर्षाका पानी संतापको शीतल करता है त्रिदोषको नाशता है सब प्रकारकी खेतीको वढाता है ॥ २१ ॥

स्वातीजलके गुण ॥

क्वचित् पुण्यतरे देशे शरद्वर्षति माधवम् ॥ २२ ॥ पित्तज्वरविनाशाय शस्यं सदा पथ्यमम्रतं स्वातिसम्भवम् ॥ २३ ॥

गगनाम्बु त्रिदोषघ्नं गृहीतं यत्त्व भाजने ॥ बल्यं रसायनं मेध्यं यन्त्रापे
क्ष्यं ततः परम् ॥ २४ ॥

शीतल है बलको करता है पुष्टिमें हित है दाहको और ज्वरको नाशता है ॥ २२ ॥ कहींक अति पवित्रदेशमें शरदऋतु उत्तम पानीको वर्षाता है यह पित्तज्वरको हरता है और खेतीकी सिद्धिका कारण है ॥ २३ ॥ आकाशका पानी सदा पथ्य है स्वातीनक्षत्रपै सूर्य हो तब वर्षा हुआ पानी अमृतरूप है सुंदरपात्रमें गृहीत किया आकाशका पानी त्रिदोषको नाशता है बलमें हित है रसायन है पवित्र है और तिस्से परै यंत्रापेक्ष्यसंज्ञक पानी जानना ॥ २४ ॥

अकालवृष्टिके लक्षण और गुण ॥

अनार्त्तवं विमुञ्चन्ति जलं जलधरास्तु यत् ॥
पतितं तत् त्रिदोषाय सर्वेषां देहिनामपि ॥ २५ ॥

जो बादल समयके विना पानीको वर्षाते हैं वह पानी सब मनुष्योंके त्रिदोषको करता है ॥ २५ ॥

अथ अकालमें वर्षाहुई वर्षाके पानीका लक्षण ॥

अकाले वृष्टिसन्तापसम्भूतं तद्विकारकृत् ॥
विशेषाच्छ्लेष्मरोगाणां कारणान्न प्रशस्यते ॥ २६ ॥

अकालमें वर्षा पानी संतापरूपी विकारको करता है और विशेषकरकै कफके रोगोंके कारनसे यह पानी उत्तम नहीं है ॥ २६ ॥

अथ धारसंज्ञकआदि च्यारप्रकारके पानीका लक्षण ॥

तथा धारं च कारं च तौषारं हैममेव च ॥
चतुर्विधं समुद्दिष्टं तेषां वच्मि गुणागुणान् ॥ २७ ॥

धार, कार, तौषार, हैम, इन भेदोंसे पानी चार प्रकारके है तिन्होंके गुण और दोषको कहताहूं ॥ २७ ॥

कारजलकी उत्पत्ति ॥

धारं चतुर्विधं प्रोक्तं वक्ष्ये कारं महामते !॥श्रीमतां महाप्राज्ञानां हिताय रुजशान्तये॥२८॥स्वर्णद्याः शीतवातेन मेघविस्फूर्जसङ्कुलम्॥शीताम्बु कठिनं भूत्वा शिलं जातं हिमेन तु॥२९॥पश्चात् सुसूर्यात् सन्तापात् किञ्चिद्वै द्रवते जलम् ॥ वमन्ति मेघाः सलिलशकलं शीतलं मतम् ॥ ३० ॥

धारसंज्ञक पानीको गांगआदि चारप्रकारसे मैं कहचुकाहूं अव हे महामते! कारसंज्ञक पानीको श्रीमान् और वडे पंडितोंके कल्याणके लिये और रोगकी शांतिके लिये मैं कहताहूं ॥ २८ ॥ गंगाआदि नदियोंका शीतलपानी मेघके शब्दसे संकुलित हुआ कठिन होके पीछे जाडा करके शिलारूपी अर्थात् वर्फ हो जाता है ॥ २९ ॥ पीछे सूर्य्यके संतापसे कछुक झिरता है तव मेघ पानीके किनके अर्थात् ओलोंको वर्षाते हैं तिन्होंका पानी शीतल माना है ॥ ३० ॥

## कारजलके गुण.

कारं शीतगुणैः श्रमोपशमनं शोषार्त्तिनिर्णाशनं मूर्च्छामोहशिरोर्त्तिनाशनकरं हिक्कावमेर्वारणम् ॥ शोफानां व्रणिनान्तु दोषशमनं पित्तात्मिकानां हितं शंसंति प्रवरं गुणैः प्रतिदिनं तस्मान्न दूरे कृतम् ॥ ३१ ॥

यह कारसंज्ञकपानी शीतके गुणोंसे परिश्रमको शांत करता है और शोषरूपी पीड़ाको नाशता है और मूर्च्छा, मोह, शिरकी पीडा, इन्होंको नाशता है हिचकीको और छर्दिको दूर करता है शोजावालोंके और घाववालोंके दोषको हरता हैं और पित्तकी प्रकृतिवालोंको हित है और उसकी वहोत प्रशंसा करते है और नित्यप्रति गुणोंसे संयुक्त होता है इसवास्ते यह पानी वर्जना नहीं ॥ ३१ ॥

## अथ तुषारपानीके गुण ॥

तौषारं लघु शीतलं श्रमहरं पित्तार्त्तिशान्तिप्रदं दोषाणां शमनं जलार्त्तिहननं सर्वामयघ्नं परम् ॥ कुष्ठश्लीपदचर्चिकाविषहरं पामाविसर्पापहं क्षीणानां क्षतशोषिणां हितकरं संसेव्यते मानवैः ॥ ३२ ॥ हैमं घनश्च मधुरश्च कफात्मकश्च मूर्च्छाश्रमार्त्तिशमनं भ्रमनाशनश्च॥ पित्तासृजः प्रशमनं रुधिरक्षमश्च शान्तिं करोति हिमसम्भववारि सद्यः ॥ ३३ ॥ धारं पृथिव्यां पतितं पयस्तु तत्रैव जातं गुणभेदभिन्नम् ॥ नानाविधैर्भेदगुणैश्च सम्यग् जातं जलं चाष्टविधं वदन्ति ॥ ३४ ॥

तौपारसंज्ञक पानी हलका है शीतल है श्रमको हरता हैं पित्तके रोगको शांत करता है दोषोंको शांत करता है जलके रोगको हरता है सव रोगोंको नाशता है और कुष्ठ—श्लीपद रोग—मकडीका विष इन्होंको नाशता है पामाको और विसर्परोगको हरता है क्षीणपुरुषोंको और क्षतशोषियोंको हितकारी है इसवास्ते मनुष्योंनें सेवना चाहिये ॥ ३२ ॥ हैमसंज्ञकपानी मोटा है मधुर है कफकारी है मूर्च्छाको श्रमको और भ्रमको हरता है रक्तपित्तको शांत

करता है रक्तको बंद करता है और शांतिको शीघ्र करनेवाला है ॥ ३३ ॥ धारसंज्ञकपानी पृथिवीमें पतितहुआ तहांही गुणोंके भेदोंसे भिन्न होजाता है पीछे अनेकप्रकारके भेद गुणोंसे अच्छीतरह संयुक्तहुआ वही पानी आठ प्रकारसे कहा है ॥ ३४ ॥

## पृथ्वीउपरके आठप्रकारका जल.

नद्यौद्भिदं प्रास्रवणं च चौंड्यं कौपं ताडागं सरसोद्भवञ्च ॥
वाप्युद्भवं तत्प्रवदन्ति धीरा नीरं समासेन वदन्ति चात्र ॥ ३५ ॥

नादेय-औद्भिद पर्वतके द्वारा झिरनेसे उपजा—चौंड्यसंज्ञक—कूवाका—तलावका-सारसका—बावडीका—ऐसे धीरवैद्य यहां विस्तारसे कहते हैं ॥ ३५ ॥

## अथ नदीके पानीका गुण ॥

यत् श्रीमताञ्चैव महीपतीनां सेव्यं तथा योग्यतमं प्रदिष्टम् ॥ नादेयमम्बु मधुरं तथा लघु रूक्षं तथोष्णं शमनञ्च वायोः ॥ ३६ ॥ सन्दीपनं शस्यविनाशनञ्च हिमागमे वा शिशिरे निषेव्यम् ॥ वलप्रदं पथ्यकरं नराणां प्रदिष्टमेतत्तु सदा भिषग्भिः ॥ ३७ ॥

नदीका पानी लक्ष्मीवालोंको और राजालोगोंको अतियोग्य कहा है और मधुर है हलका है रूखा है गर्म है वायुको शांत करता है ॥ ३६ ॥ जठराग्निको जगाता है खेतीको नाशता है शीतके आगमनमें-अथवा शिशिरऋतुमें सेवना योग्य है और बलको देता है मनुष्योंको पथ्यरूप है ऐसे पंडितोंनें सबकालमें कहा है ॥ ३७ ॥

## अथ औद्भिद पानीका गुण दोष ॥

औद्भिद्यमुष्णं लघु वातहारि सपैत्तिकं तृड्ज्वरनाशनञ्च ॥
कुष्ठव्रणानां श्रमशोषिणाञ्च शस्तं न च क्षारगुणोपपन्नम् ॥ ३८ ॥

पृथिवीको विदारितकरबडी धारासे निकसनेवाला पानी औद्भिद कहाता है यह पानी गर्म है हलका है वातको हरता है पित्तसे संयुक्त है तृषाको और ज्वरको नाशता है कुष्ठ और घाववालोंको श्रम और शोषवालोंको खारागुणसे उपपन्न हुआ श्रेष्ठ नहीं है ॥ ३८ ॥

## अथ झिरनाके पानीका गुण ॥

उष्णं कषायं स्रवणोद्भवञ्च श्लेष्मापहं गुल्महृदामयघ्नम् ॥
कण्डूविसर्पक्षयरोगकारि नानाविधं दोषचयं करोति ॥ ३९ ॥

पर्वतके द्वारा झरनासे उपजा पानी गर्म है कसैला है कफको हरता है गुल्मरोगको और

हृद्रोगको नाशता है और खाज विसर्परोग–क्षयरोग–इन्होंको करता है और अनेक प्रकारके दोषोंको संचित करता है ॥ ३९ ॥

अथ चौंड्यसंज्ञक पानीका गुण ॥

वदन्ति चौंड्यं लवणं तथा गुरु कफात्मकं वारि विकारकर्तृ ॥
हिक्काज्वरं शूलमरोचनञ्च करोति नूनं त्वचि दोषरोगम् ॥ ४० ॥

आपही शिलासे आकीर्ण हुआ छिद्रमें नीला अंजनके समान पानी हों और लता वेल आदिसे आच्छादितहो तिसको चौंड्यसंज्ञकपानी कहते हैं यह पानी सलोना है भारी है कफको करता है विकारको उपजाता है और हिचकी–शूल–अरोचक–इन्होंको उपजाता है और त्वचा अर्थात खालमें दोषको और रोगको उपजाता है ॥ ४० ॥

अथ कूवाके पानीका गुण दोष ॥

रूक्षं कफघ्नं लवणात्मकञ्च सन्दीपनं पित्तकरं लघूष्णम् ॥
कौपं जलं वातहरं प्रदिष्टं हितं न शस्तं शरदि वदन्ति ॥ ४१ ॥

कूवाका पानी रूखा है नमकसे कछुक संयुक्त है अग्निको जगाता है पित्तको करता है हलका है गर्म है वातको हरता है और शरदृऋतुमें हित नहीं है ॥ ४१ ॥

अथ तलावका पानीके गुण दोष ॥

घनं कषायञ्च तडागजं स्यात्स्वादु विपाके मधुरं तथैव ॥
शस्तं शरत्सु कफकृत् सवातं ग्रीष्मे हितं तत्प्रवदन्ति धीराः ॥४२॥

सुंदर पृथिवीके भागमें जहां वहुत वर्षोंका पानी इकट्ठाहो तिसको तलावका पानी कहते हैं यह मोठा है कसैला है स्वादु है पाकमें मधुर है शरदऋतुमें अर्थात आश्विन कार्तिकमें श्रेष्ठ है कफको करता है वायुसे सहित है ग्रीष्मऋतु अर्थात् ज्येष्ठ आषाढमें हित नहीं है॥४२॥

अथ सारसपानीके गुण दोष ॥

क्षारं घनं वातकफानुकारि त्वग्दोषकारि कटु दीपनञ्च ॥
प्रोक्तं विपाके भ्रमशोषकारि स्यात् सारसं नो सुखकारि वारि ॥ ४३ ॥

पर्वतकी शिला आदिसे रुकीहुई नदीका पानी जहां झिरकै इकट्ठा होवै तिसको सारसपानी कहते है यह पानी खारा है भारा है वातको और कफको करता है और खालमें दोषको उपजाता है कडुआ है अग्नीको जगाता है पाककालमें भ्रमको और शोषको करता है और सु- ीं है ॥ ४३ ॥

अथ नदियोंकी प्रकृति ॥

क्षारं कवोष्णं कफवातरोगविनाशनं पित्तकरं कटु स्यात् ॥
शस्तं सदा पित्तविकारिणाश्च शस्तं न शस्तं शरदि वदन्ति ॥ ४४ ॥

बावडीका पानी खारा, कुछ थोडा गरम, कफ वात रोगोंको नाशकरनेवाला पित्तकारक तीखा और पित्तविकारी मनुष्योंको सदा हितकारी है. परंतु शरदऋतुमें हितकारी नहीं है॥४४॥

अथ नदियोंकी प्रकृति ॥

इति चाष्टविधं प्रोक्तं जलं भिषजसत्तमैः ॥
नादेयं संप्रवक्ष्यामि समुद्रगामिस्रोतसाम् ॥ ४५ ॥

ऐसे उत्तमवैद्योंनें पानी आठप्रकारसे कहा है और समुद्रमें गमन करनेंवाली नदियोंको कहताहूं ॥ ४५ ॥

तथा प्राच्यांगमाश्चान्याः पश्चिमानुगमास्तथा ॥ तासां गुणागुणान् व क्ष्ये समासेन गुणोत्तम ! ॥ ४६ ॥ ससैकता सपाषाणा द्विविधा चाम्बु वाहिनी ॥ एवं चतुर्विधा नद्यो वातपित्तकफात्मिकाः ॥ ४७ ॥

पूर्वमें गमन करनेवाली और पश्चिममें गमन करनेवाली जो नदी है तिन्होंके गुणोंको हे गुणोत्तम विस्तार करकै कहूंगा ॥ ४६ ॥ वालूरेतवाली और पत्थरोंवाली ऐसे नदी २ प्रकारसे है और पूर्वोक्त दोनोंके मिलनेसे च्यार प्रकारकी नदी है ये वात पित्त कफसे संयुक्त है॥४७॥

अथ सदावहनेवाली नदीके गुण दोष ॥

सदावहा वा घनवारिकोष्णा मरुत्कफानां शमनश्च तस्याः ॥
नीरं वसन्ते हितकृद्विशेषात् नदीभवं नैव हिमागमे च ॥ ४८ ॥

सबकालमें वहनेवाली नदी मोठापानीवाली होती है कछुकगर्म होती है वायुको और कफको शांत करती है तिन्होंका पानी चैत्र और वैशाखमासमें विशेष करकै हितको करता है और जाडाके आगमनमें अच्छा नहीं है ॥ ४८ ॥

अथ पत्थरोंवाली नदीके गुण दोष ॥

घनविमलशिलानां स्फालनाज्जातफेनं वहलसजलवीचीच्छन्नसंक्षोभद्रम् ॥ ननु लघु सुखशीतं नाति चोष्णं घनश्च हरति पवनपित्तं श्लेष्म कृद्वारि सम्यक् ॥ ४९ ॥

मोटे और विशेषकरकै मलोंवाले ऐसे पत्थरोंके संयोगसे झागोंवाला और बहुतसे तरंगोंके क्षोभसे गर्मको प्राप्तहुआ और सुंदर शीतल और अतिगर्म नहीं और भारा ऐसा पानी वातको और पित्तको अच्छीतरह हरता है ॥ ४९ ॥

अथ वालूरेतवाली नदीका पानीके गुण दोष ॥

न घनविमलतोयं सैकतायाः प्रवाहो न च भवति लघुत्वं श्लेष्मकृद्धन्ति पित्तम् ॥ भवति मधुरमेवं किञ्चिदुष्णं कषायं भवति पवनकारि शोषमूर्च्छां निहन्ति ॥ ५० ॥

वालूरेतके प्रवाहमें यह पानी मोठा नहीं है विशेष करकें मलसे रहित नहीं है हलकाभी नहीं है कफको करता है पित्तको हरता है मधुर है कछुक गर्म है कसैला है पवनको करता है शोषको और मूर्च्छाको नाशता है ॥ ५० ॥

अथ उत्तरसे वहनेवाली नदियोंके और पानीके गुण दोष ॥

हिमवत्प्रभवा नद्यः पुण्या देवर्षिसेविताः ॥ घनपाषाणसिकतावाहिन्यो विमलोदकाः ॥ ५१ ॥ हन्ति वातकफं तोयं श्रमशोषविनाशनम् ॥ किञ्चित् करोति वा पित्तं त्रिदोषशमनं जलम् ॥ ५२ ॥ मलयप्रभवा नद्यः शीततोयामृतोपमाः ॥ घ्नन्ति वातञ्च पित्तञ्च शोषभ्रमश्रमापहाः ॥५३॥ गङ्गा सरस्वती शोणो यमुना सरयू शची ॥ वेणा शरावती नीला उत्तरापूर्ववाहिनी॥५४॥ हिमवत्प्रभवा स्रोता हिमसम्भवशीतलाः॥ समाः सर्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥ ५५ ॥ आसां नवशतैर्युक्ता गङ्गा प्रोक्ता मनीषिभिः ॥ तथा चर्म्मण्वती वेत्रवती पारावती तथा ॥ ५६ ॥ क्षिप्रा महापदी पीता मुसकान्या मनस्विनी ॥ शेवती शैवलिन्यश्च सिन्धुयुक्ताः समुद्रगाः॥ ५७ ॥ वातपित्तहरं नीरं त्रिदोषघ्नं मतं परम् ॥ श्रमग्लानिहरं वृष्यमुत्तराशानुगामि च ॥ ५८ ॥

हिमालय पर्वतसे उत्पन्न हुई नदी पवित्र है देवते और मुनियोंसे सेवित है मोटे पत्थर और वालूरेतको वहानेवाली है मलसे रहित पानीवाली है ॥ ५१ ॥ इन्होंका पानी वातको और कफको नाशता है श्रमको और शोषको दूर करता है अथवा कछुक पित्तको करता है और त्रिदोषको शांत करता है ॥ ५२ ॥ मलय पर्वतसे उपजी नदी शीतलपानीवाली है अ-न पानीको वहती है और वात, पित्त, शोष, भ्रम, श्रम, इन्होंको नाशती है ॥५३॥

गंगाजी, सरस्वती, शोण, यमुना, सरयू, शची, वेणा, शरावती, नीला, ये नदी उत्तरको और पूर्वको वहाती है ॥ ५४ ॥ हिमालय पर्वतसे उत्पन्न हुई और वर्फके संभवसे शीतल हुई ऐसी ये नदी सबगुणोंसे समान है और मनुष्योंके वातको और कफको हरती है ॥ ५५ ॥ इन्होंमें से नौसौ ९०० नदियोंसे युक्त हुई गंगाजी पंडितोंनें कही हैं तैसेही चर्मण्वती, वेत्रवती, पारावती, ॥ ५६ ॥ क्षिप्रा, महापदी, पीता, मृत्सका, मनस्विनी, शेवती, शैवलिनी, सिंधु, ये सब नदी समुद्रमें गमन करती है ॥ ५७ ॥ इन्होंका पानी वातको और पित्तको हरता है और त्रिदोषको हरनेवाला माना है परिश्रमको और ग्लानिको हरता है वीर्य्यमें हित है और उत्तरदिशासे आता है ॥ ५८ ॥

## अथ तापीआदिनदियोंके गुण दोष ॥

तापी तापा च गोलोमी गोमती सलिला मही ॥ सरस्वतीयुता नद्यो न र्म्मदा पश्चिमानुगाः ॥ ५९ ॥ आसां जल घनं पीतं पित्तघ्नं कफकृत्त था ॥ वातदोषहरं हृद्यं कण्डूकुष्ठविनाशनम् ॥ ६० ॥

तापी, तापा, गोलोमी, गोमती, सलिला, मही, सरस्वती, नर्मदा, ये पश्चिमसे वहती हैं ॥ ५९ ॥ इन्होंका पानी मोठा है पीला है पित्तको नाशता है कफको करता है वातदोपको हरता है सुंदर है खाजको और कुष्ठको नाशता है ॥ ६० ॥

पश्चिमाद्रिसमुद्भूता गौतमी पुण्यभावना ॥ आसां शीतं जलं वापि क फवातविकारकृत् ॥ पित्तदं शमनं बल्यं मूत्रदोषविकारकृत् ॥ ६१ ॥ पूर्णा पयस्विनी वेत्रा प्रणीता च वरानना॥ द्रोणा गोवर्द्धनी यान्या गौत म्यानुगता इमाः ॥ ६२ ॥ आसां जलं घनं नातिवातश्लेष्मविकारकृत् ॥ पूर्वसामुद्रगाश्चैव नद्यो नवशतैर्युताः ॥ ६३॥ कावेरी वीरकान्ता च भीमा चैव पयस्विनी ॥ विभावरी विशाला च गोविन्दी मदनस्वसा ॥ पार्वती चापरा.काद्यो दक्षिणादिग्गमा इमाः॥ ६४ ॥ प्रत्येकशो न सेवेत युक्ताया श्च पृथक् पृथक् ॥ सर्वासां परिसंख्या च शतानां चैकविंशतिः ॥ ६५ ॥

पश्चिमके पर्वतसे उपजी गौतमी पवित्र है इसका पानी शीतल है कफको और वातके विकारको करता है पित्तकारक है, दोषशामक है, बलकारक है, मूत्रदोषके विकारको करता है ॥ ६१ ॥ पूर्णा, पयस्वनी, वेत्रा, प्रणीता, वरानना, द्रोणा, गोवर्द्धनी इनआदि नदी गौतमी नदीके अनुगमन करती है ॥ ६२ ॥ इन्होंका पानी अति मोटा नहीं है वातके और कफके विकारको करता है और पूर्वके समुद्रमें गमन करनेवाली नौसौ ९०० नदी हैं ॥ ६३ ॥

कावेरी, वीरकांता, गोविंदी, मदनस्वसा, पार्वती, इनआदि नदी दक्षिणदिशाको गमन करती हैं ॥६४॥ एक एक नदीको नहीं सेवै और पृथक् २ युक्तहुई सब नदियोंकी २१०० इक्कीससौ संख्या अर्थात् गिनती है ॥ ६५ ॥

क्रोशे क्रोशे भवेत् कुल्या योजने योजने नदी ॥
द्वियोजना च विज्ञेया महानीरा बुधैर्नदी ॥ ६६ ॥

कोश कोशमें विस्तारवाली कुल्या कहाती है और चार चार कोशमें विस्तारवाली नदी कहाती है और आठ आठ कोशमें विस्तारवाली महानदी कहाती है ॥ ६६ ॥

अथ पृथिवीके भागका पानी ॥

भूमिः पञ्चविधा ज्ञेया कृष्णा रक्ता तथा सिता ॥ पीता नीला भवेच्चान्या गुणास्तासां प्रकीर्त्तिताः ॥ ६७ ॥ कृष्णा च मधुरा रूक्षा कषाया पीत वर्णिनी ॥ रक्ता सा च भवेत्तिक्ता मधुराम्ला सिता स्मृता ॥ ६८ ॥ नीला सकटुका ज्ञेया भूमिभागजलं विदुः ॥ सघनं मधुरं नीरं कृष्णं भूमि परिश्रितम् ॥ ६९ ॥ पीताश्रितं कषायञ्च रक्तायाः क्षारमाधुरम् ॥ सिता यामम्लमधुरं भूमिभागेन लक्षयेत् ॥ ७० ॥ तथा चतुर्विधं तोयं वक्ष्यामि शृणु कोविद ! ॥ पापोदकं रोगोदकमंशूदकारोग्योदकौ ॥ ७१ ॥

काली–लाल सपेद–पीली नीली–इन भेदोंसे पृथिवी पांचप्रकारकी है तिन्होंके गुण कहते है ॥ ६७ ॥ कालीपृथिवी मधुर है कडुई है रूषी है पीली पृथिवी कसैली है लाल पृथिवी कडुवी है सपेद पृथिवी मधुर और खट्टी है ॥ ६८ ॥ नीली पृथिवी चर्चरी जाननी ऐसेही पृथिवीके भागका पानी कहा है ॥ ६९ ॥ पीली पृथिवीका कसैला पानी है लाल पृथिवीका पानी खारा और मधुर है सपेद पृथिवीका पानी खट्टा है मधुर है ऐसे पृथिवीके भागसे पानीको लक्षितकरै ॥ ७० ॥ अब पापोदक–रोगोदक–अंशूदक–आरोग्योदक–इन भेदोंसे पानीको च्यारप्रकारसे कहताहूं हे कोविद ! सुन ॥ ७१ ॥

नदी ५

अथ पापोदकका गुण दोष ॥

पापं पापोदकं चैव करोत्येवमरोचकम् ॥ विष्ठायुक्तं यद्दि[illegible]मिकीटसमाकुलम् ॥ ७२ ॥ समलं नीलशैवालं पापन्तु नर्दितञ्च यत् ॥ स्नाने पाने न तत् शस्तं नराणां वा हयेषु च ॥ ७३ ॥ स्नानेन त्वग्भवान्रोगान् कण्डूकुष्ठविसर्पकृत् ॥ पानेन कफगुल्मानां कृमीणां वरसम्भवान् ॥ करोति विविधान् रोगांस्तस्मात्तत् परिवर्जयेत् ॥ ७४ ॥

पापोदकसंज्ञक पानी पापरूप है और रुचिको बिगाड़ता है विषसे संयुक्तहुआ पानी कबज-को करता है और कीडे आदिसे संयुक्त ॥ ७२ ॥ और मलसे सहित और नीले शिवालसे संयुक्त ऐसा पानीभी पापोदक कहाता है यह मनुष्योंको और घोडोंको स्नानमें और पानमें अच्छा नहीं है ॥७३॥ यह पानी स्नानके करनेसे खालके रोग—खाज—कुष्ठ—विसर्प—इन्हों-को करता है और पीनेसे कफके गुल्मरोगको और कृमिरोगको उपजाता है ॥ ७४ ॥

अथ रोगोदकके गुणदोष ॥

बहुवृक्षलताकुञ्जे छायाकूपोऽथवा सरः ॥ अव्ययश्चेदधोऽप्येवं कृमि शैवालसंयुतम् ॥ ७५ ॥ क्लिन्नं सपिच्छलं कृष्णं वृक्षमूलाश्रितं भवेत्॥ बहुवृक्षपर्णयुक्तं दुर्गन्धं मूत्रगन्धवत् ॥७६॥ रोगोदकं विजानीयात् क रोति विषमान् गदान् ॥ शूलं कुष्ठञ्च कण्डूञ्च सेवितेन करोति हि ॥७७॥ विण्मूत्रतृणनीलिकाविषयुतं तप्तं घनं फेनिलं दन्तग्राह्यमनार्त्तवं हि सज लं दुर्गन्धि शैवालजम् ॥ नानाजीवविमिश्रितं गुरुतरं पर्णौघपङ्काविलं च न्द्रार्कांशुसुगोपितं न च पिबेन्नीरं सदा दोषलम् ॥ ७८ ॥ गुल्मप्लीहार्शः पाण्डुश्च जलं वापि जलोदरात् ॥७९॥

बहुतसे वृक्ष और वेलोंके समूहमें जो छाया विषैं कूवाहो अथवा तलावहो और तिसमें पानी सदा बनारहताहो कीडे और शिवालसे वह पानी संयुक्तहो ॥ ७५ ॥ और क्लेदपनेको प्राप्तहो और झागोंसे संयुक्तहो कालाहो और वृक्षोंकी जडमें आश्रितहो और बहुतसे वृक्षोंके पत्तोंसे व्याप्तहो दुर्गंधितहो और मूत्रके गंधके समानगंधवालाहो ॥ ७६ ॥ तिसको रोगोदक जानना यह विषमरोगोंको करता है और सेवनेसे शूल-कुष्ठ-खाज-इन्होंको करता है॥ ७७ ॥ अथवा विष्ठा—मूत्र—तृण—नीला शिवाल—विष—इन्होंसे संयुक्तहो और गर्महो मोठाहो झा-गोंसे संयुक्तहो दंतोंको ग्रहण करताहो अकालमें वर्षाहो दुर्गंधसे युक्तहो शिवालसे संयुक्तहो अनेकप्रकारके जीवोंसे मिश्रितहो अत्यंत भाराहो पत्तोंके समूह और कीचड़से मैलाहो चंद्र-मा और सूर्यकी किरनोंसे रक्षितहो ऐसा पानीभी रोगोदक कहाता है इसकोभी नहीं पीना यह सबकालमें दोषोंको उपजाता है ॥ ७८ ॥ और सेवनेसे गुल्मरोग—तिल्लीरोग,बवासीर, पांडु,जलोदर,इन्होंको उपजाता है ॥ ७९ ॥

अथ अंशूदकके गुणदोष ॥

दिवा सूर्य्यांशुसन्तप्तं रात्रौ चन्द्रांशुशीतलम् ॥ अंशूदकमिति ख्यातं स र्वरोगनिवारकम् ॥ ८० ॥ कफमेदोनिलघ्नं च दीपनं व[illegible]शोधनम् ॥ श्वासकासहरं नीरं चक्षुष्यं नेत्ररोगहृत् ॥ ८१ ॥

दिनमें सूर्यके किरनोंसे तप्तहुआ और रात्रिमें चंद्रमाके किरनोंसे शीतलहुआ ऐसा पानी अंशूदक कहा है यह सब रोगोंको दूर करता है ॥ ८० ॥ कफ, मेद, वात—इन्होंको नाशता है जठराग्नीको जगाता है वस्तिको शोधता है श्वासको और खांसीको हरता है नेत्रोंमें हित है और नेत्रके रोगोंको हरता है ॥ ८१ ॥

## अथ आरोग्योदकके गुणदोष ॥

पादशेषन्तु कथितं तच्चारोग्यजलं विदुः ॥ कासश्वासहरं पथ्यं मारुतं चापकर्षति ॥ ८२ ॥ सद्यो ज्वरं हरत्याशु समेदःकफनाशनम् ॥ प्रतिश्यायं पाचयति शूलगुल्मार्शनाशनम् ॥ ८३ ॥ दीपनश्च हुताशस्य पाण्डुशोफोदरापहम् ॥ अजीर्णञ्च जरत्याशु पीतमुष्णोदकं निशि ॥ ८४ ॥

अग्निके द्वारा पकानेसे जो चौथाईभाग शेष रहै वह आरोग्योदक कहाता है यह खांसीको और श्वासको हरता है पथ्य है वायुको नाशताहै ॥ ८२ ॥ नये ज्वरको शीघ्र हरता है मेदको और कफको नाशता है पीनस अर्थात् खेहरको पकाता है और शूल—गुल्मरोग—बवासीर—इन्होंको नाशता है ॥ ८३ ॥ अग्निको जगाता है और पांडुरोग—शोजा—उदररोग इन्होंको हरताहै और रात्रिमें पीयाहुआ गर्मपानी अजीर्णको जराता है ॥ ८४ ॥

## अथ शीतपानीके गुण ॥

मद्यपानसमुद्भूते रोगे पित्तान्विते पुनः ॥
सन्निपातसमुत्थे च तत्र शीतोदकं हितम् ॥ ८५ ॥

मदिराके पीनेसे उपजे रोगमें और पित्तसे अन्वितहुये रोगमें और सन्निपातसे उपजे रोगमें शीतल पानीको पीना हित है ॥ ८५ ॥

## गर्मपानीके गुण ॥

शारदे च तथा ग्रीष्मे क्राथेत् पादावशेषितम् ॥ शिशिरे च वसन्ते च कुर्यादर्द्धावशेषितम् ॥ ८६ ॥ विपरीतमृतौ घृष्वा प्रावृषि चार्द्धभागिकम् ॥ ८७ ॥ क्राथ्यमानं च निर्वेगं निष्फेनं निर्मलञ्च यत् ॥ अर्द्धावशिष्टं भवति तदुष्णोदकमुच्यते ॥ ८८ ॥ तत्पादहीनं वातघ्नं चार्द्धं पित्तविकारजित् ॥ कफघ्नं पादशेषन्तु पानीयं लघु पाचनम् ॥ ८९ ॥ धारापाते ॥ शतशीतं त्रिदोषघ्नं कफान्तश्वासि शी

# षोडशोऽध्यायः ॥१६॥

## अथ शाकवर्गः ॥

शाकश्चतुर्विधं प्रोक्तं पत्रं पुष्पं फलं तथा ॥ कन्दश्चापि समुद्दिष्टं वक्ष्याम्येतत्पृथक्पृथक् ॥ १ ॥ द्विविधं शाकमुद्दिष्टं गुरु विद्यात् तथोत्तरम् ॥ प्रायः सर्वाणि शाकानि विष्टम्भीनि गुरूणि च ॥ २ ॥ रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च॥

पत्र, पुष्प, फल, कंद, इन भेदोंसे शाक च्यार प्रकारका कहा है तिसको पृथक् २ कहताहूं ॥१॥ शाक २ प्रकारका कहा है भारा और हलका और विशेषकरके सब शाक विष्टंभको करते हैं भारे हैं ॥२॥ रूखे हैं और बहुत मलवाले हैं विष्ठा और अधोवातको करते हैं.

## अथ पृथक् २ शाकोंके गुण दोष ॥

### जीवंतीशाकके गुण ॥

चक्षुष्या सर्वरोगघ्नी जीवन्ती मधुरा हिमा ॥ ३ ॥

जीवंतीशाक नेत्रोंमें हित है सब रोगोंको नाशता है मधुर और शीतल है ॥ ३ ॥

### अथ चौलाईके शाकके गुण ॥

स्वादुपाकमसृक्पित्तविषघ्नं तण्डुलीयकम् ॥
विविधवातविड्हन्ता मूत्रवातकफे हितः ॥ ४ ॥

चौलाई शाक पाककालमें स्वादु है और रक्त, पित्त, विष, इन्होंको नाशता है अनेकप्रकारका वात और विष्ठाको हरता है और मूत्र, वात, कफ, इन्होंमें हित है ॥ ४ ॥

### अथ कासविंदाके शाकके गुण ॥

मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ॥
विशेषतः पित्तहर इत्युक्तः कासमर्दकः ॥ ५ ॥

कासविंदाशाक मधुर है कफको और वातको नाशता है पाचन है कंठको शोधता है और विशेषकरके पित्तको हरता है ॥ ५ ॥

### अथ जयंती और मुकोह शाकके गुण ॥

जयंती वातकफकृत्पित्तसंशमनी तथा ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ॥ ६ ॥

जयंती शाक वातको और कफको करता है पित्तको शांत करता है मकोह विशेष शाक त्रिदोषको शांत करता है वीर्यमें हित है और रसायन है ॥ ६ ॥

अथ वथुवा और चिल्ली शाकके गुण ॥

वास्तूकं मधुरं हृद्यं वातपित्तार्शसां हितम् ॥
तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम् ॥ ७ ॥

वथुवाशाक मधुर है सुंदर है वात और पित्तकी ववासीरवालोंको हित है चिल्लीशाक-भी वथुवाके समान गुणोंको देता है परंतु वात पित्तके विकारवालोंको अच्छा है ॥ ७ ॥

अथ केतकी और मेथी शाकके गुण ॥

केतकी वातला वृष्या तन्द्रानिद्राकरी मता ॥
मेथिका वातशमनी वेजिका वातला मता ॥ ८ ॥

केतकीशाक वातल है वीर्यमें हित है तंद्राको और नींदको करता है मेथी शाक वातको शांत करता है वेजिका शाक वातको करता है ॥ ८ ॥

अथ सरसों और सोंपके शाकका गुण ॥

सार्षपञ्च त्रिदोषघ्नं रुचिदश्चाग्निवर्द्धनम् ॥
शतपुष्पा त्रिदोषघ्नी मेध्या पथ्या रुचिप्रदा ॥ ९ ॥

सरसोंका शाक त्रिदोषको नाशता है रुचिको देता है अग्नीको वढाता है सौंपका शाक त्रिदोषको नाशता है पवित्र है-पथ्य है रुचिको देता है ॥ ९ ॥

अथ कटेली और कुसुंभा शाकके गुण ॥

जरात्र सिंहिका प्रोक्ता सातीसारे प्रशस्यते ॥ कुसुम्भं रुचिकृद्वातं हन्ति बल्यं रुचिप्रदम् ॥ १० ॥ किञ्चिद्वातावहं स्वादु विपाके च कफापहम् ॥ किञ्चिच्चाम्लं भवेत्क्षारं प्रशस्तमग्निमान्द्यके ॥ ११ ॥ भेदनं रूक्ष मधुरं कषायमतिवातलम् ॥

कटेलीका शाक अतीसारमें श्रेष्ठ है कसुंभाका शाक रुचिको करता है वातको हरता है और बलमें हित है प्रीति वढाता है ॥ १० ॥ कछुक उदरमें वातको करता है पाककालमें स्वादु है कफको हरता है कछुक खट्टा है खाराहै और मंदाग्निमें श्रेष्ठ है ॥ ११ ॥ भेदन है रूखा है मधुर है कसैला है अति वातुल है

अथ चूकाशाकके गुण ॥

उष्णा कषायमधुरा चाङ्गेरीवह्निदीपनी ॥ १२ ॥

चूकाशाक गर्म है कसैला है मधुर है और अग्निको जगाता है ॥ १२ ॥

अथ दूसरे शाकोंके गुण ॥

कफादनी तथा फञ्जी तिलपर्णी तु सिंहिका ॥
चक्रमर्दन इत्यन्ये दुर्जरा वातकोपनाः ॥ १३ ॥

कफादनी, फंजी, तिलवन, सिंहिका, पुवाड, ये शाक दुर्जर है और वातको कोपतेहैं ॥ १३ ॥

अथ कफकारक और वातल शाक ॥

पिण्डालुको वला भिण्डी चिश्चुकान्या वलादनी ॥
एते श्लेष्मकराः शाका वातलाग्निप्रशान्तकाः ॥ १४ ॥

श्वेतरताल्, खरैंहटी, भिंडी, चिश्चुका, वलादनी ये शाक कफको करते हैं वातल हैं अग्निको मंद करते हैं ॥ १४ ॥

अथ शाकोंके विशेष गुण ॥

सर्वे शाका दृष्टिहरा वीर्य्यत्वात्तण्डुलीयकम् ॥ तथैव शतपुष्पश्च जयन्ती कासमर्दकम् ॥ १५ ॥ आलूषकश्च वेताग्रं गुडूची चापमर्दकम् ॥ किरात तिक्तसहितास्तिक्ताः पित्तहरा मताः ॥ १६ ॥

सब शाक दृष्टिको हरते है और वीर्यपनेसे चौलाई शौंफ–जयंती–कासविंदा ॥ १५ ॥ आलू, वेंतकी कोपल, गिलोय, चापमर्दक, चिरायता, ये शाक कडुवे है और पित्तको हरनेवाले माने है ॥ १६ ॥

अथ अन्यप्रकारके शाक ॥

कूष्माण्डकालिङ्गकलिङ्गचिर्भटं पटोलश्च पुष्पश्च तथा च तुण्डी ॥
वीजन्तु कर्कोटककारवेल्लं कोशातकीवेल्लिफलानि चैव ॥ १७ ॥

कोहला, कलिंगड, इंद्रजव, लालतूंवी, परवल, मीठीतोरी, ककोडा, करेला, कडुई तोरी, वेल्लिफल येभी सब शाक कहे है ॥ १७ ॥

अथ कोहलाका गुण ॥

कूष्माण्डं त्रिविधं ज्ञेयं बाल्यं मध्यं तथोत्तमम् ॥ वातघ्नं रोचकं बाल्यं ो ॥ १८ ॥ शोफं वातकफौ हन्ति रक्तपित्त

कोहला ३ प्रकारका जानना एक बालक दूसरा मध्य तीसरा उत्तम—बालक कोहला वातको नाशता है रुचिको उपजाता है मध्यम कोहला त्रिदोषको हरता है ॥ १८ ॥ उत्तम कोहला शोजा, वात, कफ, इन्होंको हरता है और रक्त पित्तको दूर करता है ॥ १९ ॥

अथ कुरुडुके शाकका गुण ॥

कलिङ्गं कफकृद्वातकरणं पित्तनाशनम् ॥ २० ॥

कुरुडूका शाक कफको करता है वातको करता है और पित्तको नाशता है ॥ २० ॥

अथ करेलाका गुण ॥

कारवेल्लश्च वातघ्नः कफघ्नः पित्तकारकः ॥
उष्णो रुचिकरः प्रोक्तो रक्तदोषकरो नृणाम् ॥ २१ ॥

करेला वातको नाशता है कफको हरता है पित्तको करता है गर्म है रुचिको करता है और मनुष्योंके रक्तके दोषको करता है ॥ २१ ॥

अथ लालतूरीके पुष्पका गुण ॥

पुष्पञ्च चिर्भटश्चैव दोषत्रयकरं स्मृतम् ॥
अपक्वं जीर्णकफकृत्पक्वं किंचिद्विशिष्यते ॥ २२ ॥

तूंबाका फूल त्रिदोषको करता है नहीं पकाहुआ अजीर्णको और कफको करता है और पकाहुआ कछुक विशेष होजाता है ॥ २२ ॥

अथ तोरी ककोडा करेला कडुई तोरीका गुण ॥

तुण्डीरमग्निरुचिकृद्वातपित्तनिवारणम्॥कर्कोटकं त्रिदोषघ्नं रुचिकृन्मधुरं तथा ॥ २३ ॥ कोशातकीफलं स्वादु मधुरं वातपित्तनुत् ॥ विपाके च कफं हन्ति ज्वरे शस्तं प्रदिश्यते ॥ २४ ॥

तोरीशाक अग्निको और रुचिको करता है वातको और पित्तको दूर करता है ककोडा त्रिदोषको नाशता है रुचिको उपजाता है और मधुर है ॥ २३ ॥ कडुई तोरी स्वादु है पाकमें मधुर है वातको और पित्तको नाशता है कफको हरती है और ज्वरमें श्रेष्ठ है ॥ २४ ॥

अथ परवलका गुण ॥

पटोलपत्रं विनिहन्ति पित्तं नालं कफघ्नं प्रवदन्ति धीराः ॥ फलञ्च तस्यास्तु त्रिदोषशान्तिं करोति नूनं ज्वरिणो हितं स्यात् ॥ २५ ॥

परवलका पत्ता पित्तको हरता हैं और परवलका नाल कफको नाशता है और परवलका फल त्रिदोषको शांत करता है और ज्वरवालेको निश्चय हित है ये सब वेलियोंके शाक कहे ॥ २५॥

अथ बैंगनका गुण ॥

निद्राकरं प्रीतिकरं गुरु स्यात्सवातलं कासविकारकारि ॥ श्रेष्ठं सुदीर्घं कफवर्धनञ्च सश्वासकासारुचिवर्धनञ्च ॥ २६ ॥

बैंगन नींदको और प्रीतिको करता है भारा है वातल है खांसीके विकारको करता है और सुंदर लंबा बैंगन श्रेष्ठ है कफको बढाता है और श्वास, खांसी, अरुचि; इन्होंको बढाता है ॥ २६ ॥

अथ बडी कटेलीका गुण ॥

तथा बृहत्याः फलमेव शस्तं सन्दीपनं स्यात्कफवातनाशनम् ॥ कण्डूविसर्पज्वरकामलानां तथारुचौ शस्तमिदं वदंति ॥ २७ ॥

बडी कटेलीका फल श्रेष्ठ है अग्निको जगाता है कफको और वातको नाशता है और खाज, विसर्प, ज्वर, कामला, अरुचि, इन्होंमें उत्तम है ये फलशाकके गुण कहे. ॥ २७ ॥

अथ कंदशाक ॥

कन्दशाकान्प्रवक्ष्यामि शृणु पुत्र पृथक् पृथक् ॥ सूरणः पिण्डपिण्डालू पलाण्डुर्गृञ्जनस्तथा ॥ २८ ॥ ताम्बूलपर्णः कन्दः स्याद्धस्तिकन्दस्तथापरः ॥ वराहकन्दश्चाप्यन्यः कन्दशाका इमे स्मृताः ॥ २९ ॥

कंदशाकोंको पृथक् २ कहताहूं हे पुत्र! सुन. जिमीकंद, पिंडशाक, आलू, प्याज, गाजर ॥ २८ ॥ रातालुं, हस्तीकंद, वराहकंद, ये कंदशाक कहे है ॥ २९ ॥

अथ ज़मीकंदका गुण ॥

दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ॥ विशेषात्सर्वपथ्यः स्यात्प्लीहगुल्मविनाशनः ॥ ३० ॥

जमीकंद अग्निको जगाता है कफको नाशता हैं रुचिमें हित है सुंदर है हलका है विशेष करकै पथ्य है तिल्लीरोगको और गुल्मको नाशता है ॥ ३० ॥

अथ आम्लिकाकंदका गुण ॥

आम्लिकायाः स्मृतः कन्दो ग्र ण्यर्शो ो लघ॰ ॥ ३१ ॥

आम्लिका कंद हलका है ग्रहणीदोष और बवासीरमें हित है ॥ ३१ ॥

अथ पिंडशाकका गुण ॥

पिण्डको वातलः श्लेष्मी ग्राही वृष्यो महागुरुः ॥

पिंडशाक वातको करता है कफवाला है वीर्यमें हित है बहुत भारा है–

अथ आलूका गुण ॥

पिण्डालुकः श्लेष्मकरः शुक्रवृद्धिकरो मृदुः ॥ ३२ ॥

रातालू कफको करता है वीर्यको बढाता है और कोमला है ॥ ३२ ॥

अथ प्याजका गुण ॥

पलाण्डुर्वातकफहा शुक्रलः शूलगुल्मनुत् ॥

प्याज वातको और कफको नाशता है वीर्यको बढाता है शूलको और गुलमको नाशता है

अथ रातालूका गुण ॥

ताम्बूलपर्णः कन्दः स्याच्छुक्रलो विशदो लघुः ॥ ३३ ॥

रतालूकंद वीर्यको बढाता है सुंदर है और हलका है ॥ ३३ ॥

अथ हस्तिकंदका गुण ॥

हस्तिकन्दो गुरुर्ग्राही शुक्रवृद्धिप्रदो मतः ॥

हस्तिकंद भारा है कब्जको करता है वीर्यको बढाता है

अथ वाराहकंदका गुण ॥

वराहकन्दश्चार्शोघ्नो वातगुल्मनिवारणः ॥ ३४ ॥

वाराहकंद बवासीरको नाशता है वातको और गुलमको दूर करता है ॥ ३४ ॥

अन्ये तेऽज्ञातकन्दाश्च ते न प्रोक्ता मयाऽनघ ॥ सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते ॥ ३५ ॥ दीपनोऽर्शस्तथा गुल्मक्रिमिप्लीहविनाशनः ॥ दद्रूणां रक्तपित्तानां कुष्ठानां न प्रशस्यते ॥ ३६ ॥ एते कन्दाः समाख्याताः श्रीमन्तो हि भिषग्वर ॥ ३७ ॥ इति आत्रेयभाषिते हारीतोत्तरे प्रथमस्थाने शाकवर्गो नाम षोडशोऽध्यायः ॥ १६ ॥

अन्यभी कंद है वे अप्रसिद्ध है इसवास्तै मैंनें नहीं कहेहैं परंतु सब प्रकारके कंद शाकोंमें

जमीकंद श्रेष्ठ है ॥ ३५ ॥ और अग्निको जगाता है और ववासीर, गुल्म, कृमिरोग, तिल्लीरोग, इन्होंको नाशता है परंतु दद्रू और कुष्ठको अच्छा नहीं है ॥ ३६ ॥ हेवैद्यवर ! शोभासे युक्त हुये कंद मैंनें अच्छीतरह कहेहैं ॥३७॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने शाकवर्गो नाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ॥१७॥

### अथ फलवर्ग ॥

आम्रं जम्बूश्च कोलश्च दाडिमामलकं तथा॥ खर्जूरश्च परूषश्च मातुलुङ्गपियालजम् ॥ १ ॥ नागरं वाम्लिका चैव द्राक्षा च करमर्दकम् ॥ क्षीरिका मधुराश्चैव फलवर्गे प्रकीर्त्तिताः ॥ २ ॥

आंब, जामन, वेर, अनार, आमला, छुहारा अथवा खजूरिया, फालसा, विजौरा, चिरंजी॥१॥नारंगी, अमली, दाख, करौंदा, खिरनी, सुंदर खजूर फल—ये सब फलवर्गमें कहेहैं ॥२॥

### अथ आंबके फलका गुण ॥

अपक्वमाम्रं फलमेव शस्तं संग्राहि पित्तासृजि कोपनञ्च ॥ तथा विपक्वं मधुरञ्च चाम्लं भेद्यं सपित्तामयनाशनञ्च ॥ ३ ॥

कछुक पकाहुआ आंबका फल श्रेष्ठ है कबजको करता है पित्तको और रक्तको कोपता है और विशेष पकाहुआ आंबका फल मधुर है खट्टा है दस्तावर है और पित्तके रोगको नाशता है ॥ ३ ॥

### अथ जामन वेर अनार चिरोंजीके गुण ॥

जम्बूर्ग्राही मधुरकफहा रोचनो वातहारी कोलश्चाम्लं मधुरमथवा श्लेष्मलं ग्राहि शस्तम् ॥ श्रेष्ठं वातादिकरुजहरं दाडिमञ्चामयघ्नं तत्प्रोक्तञ्च मधुरमुदितं स्वादु राजादनञ्च ॥ ४ ॥

जामनका फल कबूजको करता है मधुर है कफको नाशता है रुचिको करता है और वातको हरता है—वेर खट्टा है अथवा मधुर है कफको करता है कबूजको करता है सुंदर है अनारका फल श्रेष्ठ है वात आदिकी पीडाको हरता है और रोगको नाशता है—चिरौंजी मधुर है और स्वादु कहा है ॥ ४ ॥

अथ विशेषवर्णन ॥

परूषककरह्पीलुकानां पियालसिंहीकरमर्दकानाम् ॥ फला
नि मेहे विनिहन्ति पित्तं हन्याच्च सर्वातुरसन्धिवातम् ॥ ५ ॥

फालसा, करहा, पीलू, चिरौंजी, कटेली–करोंदी–इन्होंके फल प्रमेहको और पित्तको हरते हैं और रोगीका संपूर्ण शरीरके वातको हरता है ॥ ५ ॥

अथ विजोराका गुण ॥

स्यान्मातुलुङ्गः कफवातहन्ता हन्ता क्रिमीणां जठरामयघ्नः॥संदूषितरक्त
विकारपित्तसन्दीपनः शूलविकारहारी ॥ ६ ॥ श्वासकासारुचिहरं तृ
ष्णाघ्नं कण्ठशोधनम् ॥ दीपनं लघु रुच्यश्च मातुलुङ्गमुदाहृतम् ॥ ७ ॥
त्वक् तिक्ता दुर्जरा तिष्या क्रिमिवातकफापहा॥ स्वादु शीतं गुरु स्निग्धं
करहं वातपित्तजित् ॥ ८ ॥ मध्यं श्लेष्मातकं छर्दिकफारोचकनाशनम् ॥
दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केशरम् ॥ ९ ॥ पित्तमारुतहृद्वातपित्त
लं बद्धकेशरम् ॥ हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥ १० ॥ शूला
जीर्णविरुद्धेषु मन्दाग्नौ कफमारुते ॥ अरुचौ श्वासकासे च स्वरसोऽस्यो
पदिश्यते ॥ ११ ॥ रसोऽतिमधुरो हृद्यो वीर्य्यं पित्तानिलापहम् ॥ कफ
कृद्दुर्जरः पाके मातुलुङ्गकटाहकः ॥ १२ ॥ चेतोहारी तेन पृथगतिकटुत्व
ञ्चाभिधत्ते ॥ हृद्रोगानाहगुल्मश्वसनकफकरो ग्रीष्मकालेऽपहन्ता ॥१३॥
वीर्य्यकच्चार्शहृत्काले स्यात्तथा क्रिमिहृन्मतम् ॥ तिक्तं पुष्पञ्च बीजञ्च
गुल्मनुत्स्यात्तथापरम् ॥ १४ ॥

विजौरा कफको और वातको नाशता है और कृमिरोगको हरता है और पेटके रोगको दूर करता है दूषितहुये रक्तविकारको और पित्तको दूर करता है अग्निको जगाता है और शूल-विकारको नाशता है ॥ ६ ॥ और विजोराका फल श्वास, खांसी, अरुचि, इन्होंको नाशता है तृषाको हरता है कंठको शोधता है अग्निको जगाता है हलका है रुचिमें हित है ॥ ७ ॥ विजौराकी छाल कडुई है दुर्जर है सुंदर है और कृमि, वात, कफ,इन्होंको नाशती है और विजोराकी कोंपल स्वादु है शीतल है भारा है चिकना है वातको और पित्तको जीतता है ॥ ८ ॥ और विजौराका गूदा कफको नाशता है छर्दिको और कफके अरोचकको नाशता

है और विजौराका केसर अग्निको जगाता है हलका है कब्जको करता है गुल्मको और ववासीरको नाशता है॥९॥पित्तको और वातको हरता है और केसरसे संयुक्तहुआ विजौराका फल पित्तको और वातको करता है सुंदर है वर्णको करता है रुचिमें हित है और रक्त, मांस, वल, इन्होंको देता है ॥ १० ॥ और विजोराका स्वरस शूल, अजीर्ण, मंदाग्नि, कफ, वात, अरुचि, श्वास, खांसी, इन्होंमें उत्तम है ॥११॥ और विजोराका रस अति मधुर है सुंदर है वीर्यको देता है पित्तको और वातको नाशता है कफको करता है और पाककालमें दुर्जर है ॥ १२ ॥ और चित्तको हरता है तिस्से. पृथक् अति चर्चरापनाको धरता है और हृद्रोग,अफारा, गुल्म,श्वास, इन्होंको अन्यकालमें करता है और गर्मकालमें नाशता है॥१३॥ विजौराके फूल और वीज सुंदर कालमें वीर्यको करते हैं ववासीरको दूर करते हैं कृमिको हरते हैं कडुवे है और गुल्मको नाशते हैं ॥ १४ ॥

## अथ नींवूका गुण ॥

निम्बूकं क्रिमिसमूहनाशनं तीक्ष्णमुष्णमुदरग्रहापहम् ॥ वातपित्तकफशूलिनां हितं नष्टधान्यरुचिशोधनं परम् ॥ १५ ॥ त्रिदोषसद्योज्वरपीडितानां दोषाश्रितानाञ्च स्रवज्जलानाम् ॥ मलग्रहे बद्धगुदे हितञ्च विसूचिकायां मुनयो वदन्ति ॥ १६ ॥

निंवू कीडोंके समूहको नाशता है तीक्ष्ण है गर्म है पेटके कजबको हरता है और वात, पित्त, कफ, इन्होंके शूलवालोको हित है और नष्टअन्नमें रुचिको शोधता है ॥ १५ ॥ त्रिदोष और तत्काल उपजे ज्वरसे पीडितको और दोषसे आश्रित हुयोंको और पानीको झिरातेहुयेको और विष्ठाके वंधमें और वद्धगुदरोगमें और विसूचिका अर्थात् हैजाके भेदमें हित है ऐसे मुनिजन कहते हैं ॥ १६ ॥

## अथ नारंगीका गुण ॥

नारङ्गजं स्वादु गुणोपपन्नं सन्दीपनं रोचकमर्शसाञ्च ॥ त्रिदोषहृच्छूलक्रिमीन्निहन्ति मन्दाग्निकासश्वसनापहारि ॥ १७ ॥

नारंगीफल स्वादु है गुणवाला है अग्निको जगाता है ववासीरमें रुचिको उपजाता है और त्रिदोष, शूल, कृमि, मंदाग्निरोग, खांसी, श्वास–इन्होंको नाशता है ॥ १७ ॥

## अथ अम्लीका गुण ॥

अम्ली हि चाम्लफलमविपक्वं तदस्रपित्तामकरं विदाहि ॥ वातामये शूलगदे प्रशस्तं पक्वं तथा शीतगुणोपपन्नम् ॥ १८ ॥

नही पकाहुआ अम्लीफल पित्तको और आमको करता है विशेषसे दाहको करता है वातरोगमें और शूलमें श्रेष्ठ है और पकाहुआ अम्लीका फल शीतल होता है ॥ १८ ॥

अथ दाखका गुण ॥

द्राक्षाफलं मधुरमम्लकषाययुक्तं क्षारेण पित्तमरुतां कफहारि शीघ्रम् ॥ श्रेष्ठं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्वसनकासविनाशकारि॥१९॥ कषायघ्ना विपाके च द्राक्षा चैव कफे हिता ॥ २० ॥

दाख मधुर है खट्टा है कसैला है खारिपनेसे पित्त–वात–कफ–इन्होंको शीघ्र हरता है श्रेष्ठ है और रक्तरोग–दाह–शोष–मूर्च्छा–ज्वर–श्वासरोग–खासी–इन्होंको नाशता है ॥१९॥ और पाककालमें कसैलेपनेको नाशता है और कफमें हित है ॥ २० ॥

अथ नारियलका गुण ॥

नालिकेरं सुमधुरं गुरु स्निग्धश्च शीतलम् ॥ हृद्यं सबृंहणं वस्तिशोधनं रक्तपित्तनुत् ॥२१ ॥ विष्टम्भि पक्कं मतिमन्नपक्कं कफवातलम् ॥ बृंहणं शीतलं वृष्यं नालिकेरफलं विदुः ॥ २२ ॥

नारियल मधुर है भारा है चिकना है शीतल है सुंदर है धातुओंको पुष्ट करता है वस्तिको शोधता है रक्तपित्तको नाशता है ॥ २१ ॥ विष्टंभी है ये सब पकेहुयेके गुण है हेबुद्धिमन् ! नहीं पकाहुआ नारीयल कफको और वातको करता है धातुओंको बढाता है शीतल है और वीर्यमें हित है ॥ २२ ॥

अथ केलाके फलका गुण ॥

हृद्यं मनोज्ञं कफवृद्धिकारि शान्तश्च सन्तर्पणमेव बल्यम् ॥ रक्तं सपित्तं श्वसनश्च दाहं रम्भाफलं हन्ति सदा नराणाम् ॥ २३ ॥ अपक्कं संग्राहि च शीतलश्च कषायकं वातकफं करोति ॥ विष्टम्भि बल्यं गुरु दुर्जरश्च आरण्यरम्भाफलमेव तद्वत् ॥ २४ ॥

पकाहुआ केलाका फल सुंदर है मनोहर है कफको बढाता है शांतिको करता है तृप्तिको करता है बलमें हित है और रक्तपित्त-श्वासरोग–दाह–इन्होंको सबकालमें नाशता है२३ नहीं पकाहुआ केलाका फल कब्जको करता है शीतल है कसैला है वातको और कफको करता है विष्टंभी है बलमें हित है भारा है दुर्जर है और वनके केलाका फलभी इन्हीं गुणोंवाला है ॥ २४ ॥

अथ कैथका गुण ॥

कपित्थकाम्लं मधुरं कषायं विशदं गुरु ॥ कासातिसारहृद्रोगच्छर्दि कफामयापहम् ॥ २५ ॥ कपित्थं मधुरं शीतं कषायं ग्राहकं लघु॥२६॥

कैथफल खट्टा है मधुर है कसैला है सुंदर है भारा है और खांसी, अतीसार, हृद्रोग, छर्दि, कफरोग, इन्होंको नाशता है ॥ २५ ॥ कच्चाकैथफल मधुर है शीतल है कसैला है कब्जको करता है और हलका है ॥ २६ ॥

अथ खजूरिया अथवा छुहाराका गुण ॥

अपक्कं खर्जूरफलं त्रिदोषशमनं मतम् ॥
पक्कमेव हितं श्रेष्ठं त्रिदोषशमनं परम् ॥ २७ ॥

नहीं पकाहुआ खजूरिया अथवा छुहारा त्रिदोषको शांत करता है और पकाहुआ हित हैं श्रेष्ठ है और निश्चय त्रिदोषको शांत करता है ॥ २७ ॥

अथ सुपारीका गुण ॥

कषायमधुरं भेदि पूगं पित्तकफापहम् ॥ २८ ॥

सुपारीफल कसैला है मधुर है मलको पतला करता है पित्तको और कफको नाशताहै२८

अथ नागरपानका गुण ॥

नागवल्लीदलं हृद्यं सुगन्धि कफवातजित् ॥ २९ ॥

नागरपान सुंदर है सुगंधवाला है कफको और वातको जीतता है ॥ २९ ॥

अथ कत्थाका गुण ॥

खदिरः कफपित्तघ्नः कण्ठ्यः कुष्ठनिवर्हणः ॥ ३० ॥

कत्था कफको और पित्तके नाशता है कंठमें हित है कुष्ठको दूर करता है ॥ ३० ॥

अथ चुन्नाका गुण ॥

चूर्णकं पित्तहृत्तीक्ष्णं ताम्बूलं कफवातजित् ॥ ३१ ॥ संयोगात्सुरसं स्वादु मुखवैरस्यनाशनम् ॥ दन्तस्थैर्यकरं शोषपीनसरोगशान्तिकृत्॥३२॥

चुन्ना पित्तको हरता है तीक्ष्ण है और नागरपान कफको और वातको जीतता है परंतु संयोगसे सुंदर रसवाला है स्वादु है और मुखमें विरसपनेको करता है ॥ ३१ ॥ और दंतोंको स्थिर करता है और शोष, पीनस इनको शांत करता है ॥ ३२ ॥

अथ कत्था कपूरसे संयुक्त नागरपानका गुण ॥

रोगपाटवसंशुद्धिस्वरकान्तिकरं मतम् ॥ कण्ठ्यं रुच्यमुरस्यञ्च फलकर्पूरसंयुतम् ॥ ३३ ॥ इति आत्रेयभाषिते हारीतोत्तरे प्रथमस्थाने फलवर्गो नाम सप्तद शोऽध्यायः॥ १७ ॥

कत्था कपूरसे संयुक्त किया नागरपान रोगको शोधता है स्वरको और कांतिको करता है कंठमें हित है रुचिको उपजाता है और छातीमें गुणको करता है ॥ ३३ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने फलवर्गो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ॥ १८ ॥

अथ मधुवर्ग ॥

अतो वक्ष्यामि माक्षीकं त्रिविधं शृणु पुत्रक ! ॥
भ्रामरं सारघं क्षौद्रं तेषां वच्मि गुणागुणम् ॥ १ ॥

अब शहदको कहूंगा हेपुत्र! वह शहद तीन प्रकारका है सुन भ्रामर१ सारघ२ क्षौद्र ३ तिन्होंके गुणोंके और दोषोंको कहताहूं ॥ १ ॥

अथ शहदका गुण ॥

शीतं कषायं मधुरं लघु स्यात्सन्दीपनं लेहनमेव शस्तम् ॥ संशोधनञ्च व्रणशोधनञ्च संरोपणं हृद्यतमञ्च बल्यम् ॥ २ ॥ त्रिदोषनाशं कुरुते च पुष्टिं कासक्षये वा क्षतजे च छर्दौ ॥ हिक्काभ्रमे शोषणपीनसानां रक्तप्रमेहे सरलातिसारे ॥ ३ ॥ रक्तातिसारे च सपित्तरक्ते तृण्मोहहृत्पार्श्वगदेऽपि शस्तः ॥ नेत्रामये वा ग्रहणीगदे वा विषे प्रशस्तं भ्रमरैश्चितं यत् ॥ ४ ॥

शहद शीतल है कसैला है मधुर है हलका है अग्निको जगाता है स्वादु है सुंदर शोधता है घावको शुद्ध करता है घावपै अंकुरको लाता है अति मनोहर है बलमें हित है ॥ २ ॥ त्रिदोषको नाशता है पुष्टिको करता है खांसीमें, क्षयमें,छातीके फटनेमें, छर्दीमें और हिचकी, भ्रम, शोष, पीनस, रक्तप्रमेह कोमल, अतीसार, इन्होंमें हित है ॥३॥ और रक्तातिसार, पित्तर-

क, तृषा, मोह, हृद्रोग, पसलीरोग, इन्होंमें श्रेष्ठ है भ्रामर शहद नेत्ररोगमें अथवा संग्रहणीमें और विषमें हित है ॥ ४ ॥

अथ शहदकी विशेषता ॥

भ्रामरं सघनं जाड्यं भूयिष्ठं मधुरश्च यत् ॥ क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेहनम् ॥ ५ ॥ तस्माल्लघुतरं रूक्षं सारघं नातिशीतलम् ॥ कासे क्षये प्रशस्तं स्यात्कामलाशोंविनाशनम् ॥ ६ ॥ नातिशीतं नच रूक्षं दीपनं वलकृन्मतम् ॥ अतीसारे नेत्ररोगे क्षते वा क्षतजं हितम् ॥ ७ ॥ भ्रामरं वृक्षसंस्थाने विटपे सारघं भवेत् ॥ रन्ध्रे तु कोटरे वापि क्षौद्रं तत्र प्रशस्यते ॥ ८ ॥ इति आत्रेयभाषिते हारीतोत्तरे मधुवर्गो नाम अष्टादशोऽध्यायः ॥ १८ ॥

भ्रामर शहद कठिन है मोटा है भारा है मधुर है और क्षौद्रसंज्ञक शहद विशेषपनेसे शीतल है हलका है स्वादु है ॥ ५ ॥ इस्सेभी अति हलका सारघ शहद है यह रूखा है अति शीतल नहीं है खांसीमें और क्षयमें अतिश्रेष्ठ है कामलाको और ववासीरको नाशता है ॥ ६ ॥ क्षौद्रशहद अतिशीतल नहीं है रूखाभी नहीं है अग्निको जगाता है वलको करता है और अतीसार—नेत्ररोग—घाव—क्षतसे उपजारोग—इन्होंमें हित है ॥ ७ ॥ वृक्षपै भ्रामर शहद होता है तृणके गुच्छेमें सारघ शहद होता है वृक्षके छिद्रमें अथवा कोटरमें क्षौद्र शहद होता है ॥ ८ ॥ इति वेरीनिवासिवुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने मधुवर्गोनाम अष्टादशोध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ॥ १९ ॥

अथ मद्यवर्ग ॥

गौडी माध्वी तथा पैष्टी निर्यासा कथितापरा ॥ इति चतुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः ॥ १ ॥ भेदेन द्वादश प्रोक्ताः सुराः सौवीरकारसैः ॥ सीधुर्गौडी च मत्स्यण्डी गुडेन प्रभवास्त्रयः ॥२॥ माध्वीकं मधुकं माध्वं मधुना संयुताः सुराः॥ पैष्टीष्वरिष्टजातन्तु तण्डुलप्रभवास्त्रयः ॥३॥ मृद्वीकारससम्भूता ताडमाडरसोद्भवा ॥ निर्यासा सा तु विज्ञेया तासां वच्मि गुणागुणम् ॥ ४ ॥

गौडी, माध्वी, पैष्टी, निर्यासा, इनभेदोंसे मदिरा ४ प्रकारकी है तिन्होंके भेद ॥ १ ॥ बारह १२ कहे है सीधु–गौडी–मत्स्यंडी–ये तीन मदिरा गुडसे बनती हैं ॥ २ ॥ माध्वीक, मधुक, माध्व, ये तीन मदिरा शहदसे बनती हैं पैष्टी, अरिष्ट, जात, ये तीन मदिरा चावलोंसे बनती हैं ॥ ३ ॥ मृद्वीका मदिरा रससे बनती है ताडमदिरा ताडके रससे बनती है और वही निर्यासा मदिरा जाननी तिन्होंके गुण और दोषोंको कहताहूं ॥ ४ ॥

अथ सुधुमदिराका गुण ॥

सीधुः कषायाम्लकमाधुरो वा सन्दीपनो भेदमलापमर्दः ॥ आमातिसारानिलपित्तशूलश्लेष्माभयार्शोग्रहणीगदघ्नः ॥ ५ ॥

सीधुमदिरा कसैली है खट्टी है अग्निको जगाती है मेदको और मलको नाशती है और आमातीसार, वात, पित्त, शूल, कफका रोग, बवासीर, ग्रहणीदोष, इन्होंको नाशता है॥ ५ ॥

अथ गौडी मदिराका गुण ॥

गौडी कषाया मधुराम्लशीता सन्दीपनी शूलमलापहन्त्री ॥ हृद्या त्रिदोषं शमयत्यजीर्णं पाण्डूमथार्शः श्वसनं निहन्ति ॥ ६ ॥

गौडीमदिरा कसैली है मधुर है खट्टी है शीतल है अग्निको जगाती है शूलको और अफाराको हरती है सुंदर है और त्रिदोष, अजीर्ण, पांडुरोग, बवासीर, श्वासरोग इन्होंको शांत करती है ॥ ६ ॥

अथ मत्स्यंडी मदिराका गुण ॥

हरति मलमियश्च दीपनी पाण्डुमेहान् लघुमधुरसुशीता रोचना पित्तहन्त्री ॥ जरयति सकलं वा पीतमम्लातिसात्रं श्वसनरुधिरकासान् हन्ति वा कामलाश्च ॥ ७ ॥

राबकी मदिरा अग्नीको जगाती है और मल, पांडुरोग, प्रमेह, इन्होंको हरती है हलकी है मधुर है सुंदर शीतल है रुचिको करती है पित्तको हरती है सब चीजोंको जराती है पीनेमें खट्टी है और श्वासरोग, रक्त, खांसी, कामला, इन्होंको नाशती है ॥ ७ ॥

अथ माध्वीक मदिराका गुण ॥

माध्वीकं शीतलं चाम्लं मधुरमपि तथा कषायोष्णकश्च हन्यात्पित्तामयार्शः श्वसनमपि तथा चातिसारं प्रमेहान्॥ शूलानाहोपमर्दं जरयति सकलं दीपयत्यग्निसात्म्यं तस्माद्वातामवातं वमनमपि तथा हन्ति सर्वांश्च रोगान्॥८॥

मेऽपस्मारे च पक्षाणाश्च भ्रमेषु च ॥ १४ ॥ श्रान्ते वा विषपीते वा सर्पदष्टे जलोदरे ॥ रक्तपित्ते तथा श्वासे वारुणी न हिता मता ॥ १५ ॥
इति आत्रेयभाषिते हारीतोत्तरे मद्यवर्गो नामैकोनविंशोऽध्यायः ॥ १९ ॥

कषायपनेसे युक्त हुआ पित्त जब पूर्ण होवै तब योगसे युक्तकरी मदिरा हित है यह बहुत दोषोंको हरती है और विशेष करकै कफके रोगमें हित है ॥ १३ ॥ परिश्रम और ज्वरसे पीडित और शोष, शोजा, पांडुरोग, क्षय, वृद्धिकी,ग्लानि, मृगीरोग, यशआदिसें उपजा भ्रम इन्होंसे पीडितको ॥ १४ ॥ और शांतहुयेको और विषको पीयेहुयेंको और सर्पसे डसेको और जलोदर—रक्तपित्त—श्वासरोग, इन्होंसे पीडितको मदिरा हित नहीं है ॥ १५ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने एकोनविंशोध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ॥ २० ॥

### अथ चौपायोंका और दुपायोंका मांसवर्ग ॥

शूलिनः शृङ्गिणश्चैव नखिनोऽन्ये प्रकीर्तिताः ॥ श्वापदाः पक्षिणश्चान्ये मत्स्याश्चान्याः सरीसृपाः ॥ १ ॥ जलेचरा जलाधारा ग्रामारण्यनिवासिनः ॥ अनूपा जाङ्गला जीवास्तथा साधारणोऽपरः ॥ २ ॥ मृगरुरुचित्राङ्गास्तथा गण्डश्च वनगवयमहिषाः ॥ सूकराद्याश्च येऽपि भवन्ति विविधवर्णा ग्रामवासिनश्च ॥ ३ ॥ ये ये वनगजाद्याश्च ग्रामकाद्याश्च शृङ्गिणः ॥ शूकरच्छिक्कराद्याश्च शूरिणो वा भवन्त्यमी ॥ ४ ॥

शूलवाले, शिंगवाले, नखवाले, श्वापद, पक्षी, मच्छ, सर्प ये जो कहे हैं ॥ १ ॥ जलमें विचरनेंवाले, जलके आश्रितहुये ग्राममें वसनेंवाले, वनमें वसनेंवाले, आनूपदेशमें रहनेवाले-जांगलदेशमें रहनेंवाले, साधरणदेशमें रहनेंवाले ॥ २ ॥ मृग, रोहिषमृग, विलावभेद, गैंडा, रोझ, भैंसा, शूरआदि—ये सब अनेक प्रकारका वर्णवाले ग्राममें वसनेवाले है ॥ ३ जो जो वनमें रहनेवाले हस्तीआदि हैं और जो ग्राममें रहनेंवाले शींगवाले हैं और शूर, छिक्कर इनआदिभी ग्रामवासी है ॥ ४ ॥

### अथ सरीसृपवर्णन ॥

शशकः शल्लकी गोधा मार्जाराद्या नखायुधाः ॥

सर्पमत्स्यादिका ये च ते विज्ञेयाः सरीसृपाः ॥ ५ ॥

शशा, सेह, गोह, बिलाव, इनआदि नखरूपी शस्त्रोंवाले है सर्प और मच्छ आदि सरीसृप संज्ञक जानने ॥ ५ ॥

अथ आनूपवर्णन ॥

मत्स्यमङ्कुरकाद्या ये कच्छपा दुर्जरादयः ॥ हंससारसचक्राद्याः कपिञ्जलकुमूद्काः॥६॥आनूपास्तेषु विज्ञेयाः श्लेष्मला वातकोपनाः॥७॥

मच्छ, मंकुरक आदि कच्छप ये दुःखसे जरनेंवाले है और हंस, सारस, चकुवा, इन आदि और पपैय्या, पंडेरिआ पक्षी, ॥ ६ ॥ ये सब आनूपदेशमें रहनेंवाले होते है और कफको करते है और वातको कोपते है ॥ ७ ॥

अथ जाङ्गलवर्णन ॥

शशलावकवाताटा गोधाहरिणकूटकाः ॥ छिक्कराद्यास्तथान्येऽपि तित्तिराद्याश्च कूर्चकाः ॥ ८ ॥ भारद्वाजास्तथा श्येना मूषका वरवारणाः ॥ इत्येता जाङ्गला जीवा ये जलेन विना स्थिताः ॥ ९ ॥

शशा, लावा, वाताट, गोह, हरिंण, कूटक, छिकर आदि और तीतरआदि, जीवक पक्षी॥ ॥८॥ काग अथवा मुर्गा विशेष, शिकरा, मूषा-मापीविशेष ये सब जांगलसंज्ञक है ये पानीके विनाभी स्थित रह सकते है ॥ ९ ॥

अथ जलचरजीववर्णन ॥

शूकरा मृगशल्लाद्याः सलिलाशयमाश्रिताः ॥ मकराद्याश्च गण्डाका गवयाश्च तथापराः ॥ १० ॥ महिषाद्याश्च ये चैव ते च साधारणा मताः ॥ कुररवकमकराः कङ्कचटकपिकभृङ्गसारसाः ॥ ११ ॥ आडिदात्यूहहंसा जलकरटिकपिङ्गटिट्टिभाद्याश्च ॥ जलेचरा विहङ्गास्ते खञ्जरीटाश्च भासकाः ॥ १२ ॥ इत्येते जलजा जीवाः स्थलजाः स्थलचारिणः ॥ १३ ॥

शूर, हरण, शल्ल अर्थात् गोहके आकार जीव इन आदि जीव पानीका आशयके आश्रित रहते है और मकर मच्छ आदि-गैंडा-रोझ॥१०॥भैंसा आदि जीव साधारणमाने है और पपैय' बगला—मकरा— कंक— चत्तक—कोयल— भौरा—सारस— ॥ ११ ॥ आडीपक्षी-ढौंकरपक्षी हंस—शंखकाजीव—रटिक—पिंगापक्षी—टिटवीपक्षी इनआदि॥१२॥जलमें विचरनेंवाले है खंजरीट और भासपक्षीभी जलचारी है और स्थलमें विचरनेंवाले स्थलचारी जीव ॥ ॥

अथ ग्रामचारी पशुवर्ग ॥

गजवाजिनस्तथोष्ट्रा माहिषा सौरभाजकाः ॥ खरशूकरमेषाश्च श्वानो मार्जारमूषकाः ॥ १४ ॥ इत्येते पशवो ज्ञेया ग्रामवासनिवासिनः ॥

हस्ती, घोडा, ऊंट, भैंसा, बैल, बकरा, गधा, शूर, मेंढा, कुत्ता, बिलाव, मूषा ॥ १४ ॥ ये सब जीव गाममें वसनेवाले है ॥

ग्रामचारी पक्षी

कुक्कुटकलविङ्कपारावतकपोतकाः ॥ १५ ॥
पक्षिणो ग्रामचाराश्च वच्मि चैषां गुणागुणम् ॥ १६ ॥

और मुर्गा, चिमणापक्षी, परेवा, कबूतर, ॥ १५ ॥ ये पक्षी गाममें विचरते है इन्होंके गुण और दोषको कहताहूं ॥ १६ ॥

हरिणोंके मांसका गुण ॥

शृङ्गिणां हरिणः श्रेष्ठो बल्यो रोचनदीपनः ॥
त्रिदोषघ्नो लघुः पाके मधुरो ज्वरिणां हितः ॥ १७ ॥

शिंगवालोंमें हरिण श्रेष्ठ है बलमें हित है रुचीको देता है अग्निको जगाता है त्रिदोषको हरता है हलका है पाककालमें मधुर है ज्वरवालोंको हित है ॥ १७ ॥

अथ कृष्णमृगके मांसका गुण ॥

क्षते क्षयार्शसोः पाण्डावरोचकनिपीडिते ॥
कासश्वासातुराणाञ्च एणमांसं सुखावहम् ॥ १८ ॥

छातीका फटजाना, क्षय, बवासीर, पांडु, अरुचो, खांसी, श्वास, इन्होंसे पीडित रोगियोंकों कृष्णमृगका मांस हित है ॥ १८ ॥

अथ चित्रांगके मांसका गुण ॥

चित्राङ्गो वातशमनो बृंहणो बलकृन्मतः ॥
श्लेष्मलः कथितो वापि दुर्जरो मेदवर्द्धनः ॥ १९ ॥

बिलावका मांस वातको शांत करता है धातुओंको पुष्ट करता है बलको बढाता है कफको करता है दुर्जर है और मेदको बढाता है ॥ १९ ॥

अथ छिक्करके मांसका गुण ॥

छिक्करो लघु बृंही च मधुरो दोषनाशनः ॥

तुल्यो हरिणमांसस्य ज्वरेष्वपि प्रशस्यते ॥ २० ॥

छिकरका मांस हलका है धातुओंको पुष्ट करता है मधुर है दोषको नाशता है मृगका मांसके समान है और ज्वरमें श्रेष्ठ है ॥ २० ॥

अथ रक्तमृगके मांसका गुण ॥

रोहितो बृंहणश्चैव विबन्धी दुर्जरो घनः ॥
ज्वरिणां विषमाग्नीनामतीसारेण त्रास्यते ॥ २१ ॥

रक्त मृगका मांस धातुओंको बढाता है विशेष करकै बंधाको करता है दुर्जर है कठिन है और ज्वर, विष, अग्नी, इनरोगवालोंको अतीसार करके त्रासित करता है ॥ २१ ॥

अथ गैंडा, रोझ, भैंसा, ऊंट, घोडा-इन्होंके मांसोंके गुण ॥

तथैव गण्डगवयमहिषोष्ट्रतुरङ्गकाः ॥
विबन्धिगुरवः स्निग्धा वातालस्ये प्रकीर्त्तिताः ॥ २२ ॥

गैंडा, रोझ, भैंसा, उंट, घोडा इन पांचोंके मांस विशेष करकै बंधाको करते है भारे हैं चकने हैं वातमें और आलस्यमें हित है ॥ २२ ॥

अथ शूरके मांसका गुण ॥

वातघ्नं रोचनं वृष्यं दुर्जरं श्रमनाशनम् ॥
वातलं पित्तशमनं रुचिदं धातुवर्द्धनम् ॥ २३ ॥

शूरका मांस वातको नाशता है रुचिमें हित है वीर्यमें हित है दुर्जर है परिश्रमको नाशता है पित्तको शांत करता है धातुओंको बढाता है ॥ २३ ॥

अथ शशाके मांसका गुण ॥

शशको जाङ्गलश्रेष्ठो लघुर्वृष्यश्च दीपनः ॥ रुचिकृत्तर्पणो बल्यस्त्रिदोषशमनो मतः ॥ २४ ॥ ज्वरे च पाण्डुरोगे च क्षये कासे गुदामये ॥ राजयक्ष्मणि पाण्डौ च तथातीसारिणां हितः ॥ २५ ॥

शशाका मांस जांगलजीवोंके मांसोंमें श्रेष्ठ है हलका है वीर्यमें हित है अग्निको जगाता है रुचिको करता है तृप्तिको करता है बलमें हित है और त्रिदोषको शांत करता है ॥२४॥ और ज्वर, पांडुरोग, क्षय, खांसी, बवासीर, राजरोग, पांडुरोग, आतीसार, इनरोगवालोंको हित है ॥ २५ ॥

अथ शेहके मांसका गुण ॥

शल्लकी बृंहणो बल्यः स्निग्धो वृष्यो रुचिप्रदः ॥
वातश्लेष्महरो हृद्यो मधुरो धातुवर्द्धनः ॥ २६ ॥

शेहका मांस धातुओंको पुष्ट करता है वीर्यमें हित है बलको करता है चिकना है रुचिको देता है वातको और कफको हरता है सुंदर है मधुर है और धातुओंको बढाता है॥२६॥

अथ गोह सरीखा शल्यकनामवाला जीवके मांसका गुण ॥

शल्यको बृंहणो बल्यः स्निग्धो वृष्यो रुचिप्रदः ॥
वातलः किञ्चिद्धातूनां वर्द्धनो मधुरो घनः ॥ २७ ॥

गोह सरीखा जीवका मांस धातुओंको पुष्ट करता है बलमें हित है चिकना है वीर्यमें हित है रुचिको देता है वातको करता है धातुओंको कछुक बढाता है मधुर है और कठिन है ॥ २७ ॥

अथ गोहके मांसका गुण ॥

रक्तपित्तहरा वृष्या स्निग्धा मधुरशीतला ॥
श्वासकासहरा प्रोक्ता गोधा चार्शोहिता बला ॥ २८ ॥

गोहका मांस रक्तपित्तको हरता है वीर्यमें हित है चिकना है मधुर है शीतल है श्वासको और खांसीको हरता है और ववासीरमें हित है ॥ २८ ॥

अथ मूषाके मांसका गुण ॥

स्निग्धो बलकरः शुक्रवर्द्धनो मधुरो लघुः॥दुर्नामक्रिमिदोषघ्नो वातहारी च मूषकः ॥ २९ ॥ इति आत्रेयभाषिते हारीतोत्तरे चतुष्पदानां मांसवर्गो नाम विंशोऽध्यायः ॥ २० ॥

मूसाका मांस चिकना है बलको करता है वीर्य्यको बढाता है मधुर है हलका है और ववासीरको और कृमिदोषको हरता है और वातकोभी नाशता है ॥ २९ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थानेमांसवर्गोनाम विंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः ॥ २१ ॥

## अथ स्थलमें विचरनेंवाले जीवोंका मांसवर्ग ॥

### प्रथम लावापक्षीके मांसका गुण ॥

पक्षिणाञ्च महाश्रेष्ठो लावको जाङ्गलात्मजः ॥ संग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः ॥१॥ तथा विपाके मधुरः सन्निपातेऽतिपूजितः॥२॥

लावाका मांस सब पक्षियोंके मांससे श्रेष्ठ है परंतु जांगलदेशमें विचरनेंवाला लावापक्षीका मांस हो यह कब्जको करता है अग्निको जगाता है कसैला है मधुर है और हलका है ॥१॥ और पाककालमें मधुर है और सन्निपातमें अतिपूजित है ॥ २ ॥

### अथ तीतरके मांसका गुण ॥

तथैव तित्तिरो वृष्यो मेधाग्निबलवर्द्धनः ॥ सर्वदोषहरो बल्यो बलाका समता गुणैः ॥ ३ ॥ वार्त्ताको विशदो वृष्यो यथा लावस्तथैव च ॥ कृष्णगौरप्रभेदाश्च श्रेष्ठो गौरश्च तित्तिरः ॥ ४ ॥ तृतीयतित्तिरोऽन्योऽपि सामान्यो गुणलक्षणैः ॥ सवातलोऽतिबलकृद्घनः किञ्चिद्रसायनः ॥ ५ ॥

तीतरका मांस वीर्यमें हित है और बुद्धि, अग्नि, बल, इन्होंको बढाता है सबदोषोंको हरता है बलमें हित है और बगलाका मांसके समान गुणोंवाला है ॥ ३ ॥ वार्ताकसंज्ञक तीतरका मांस सुंदर है वीर्यमें हित है और लावाका मांसके समान गुणोंवाला है कृष्ण और गौर तीतरोंमें गौर वर्णका तीतर श्रेष्ठ है ॥४ ॥ गुण और लक्षणों करकै समान तीसरे रंगका तीतर अन्यभी होता है परंतु वह वातल है अतिबलको करता है तिसका मांस कठिन है और कछुक रसायन है ॥ ५ ॥

### अथ नीला मोरके मांसका गुण ॥

मेधावृद्धिं सोतसाञ्च करोत्युत्पाटनं शिखी ॥
सवातलोऽतिबलकृद्घनः किञ्चिद्रसायनः ॥ ६ ॥

नीला मोरका मांस बुद्धिको बढाता है और कानोंको उत्पाटित करता है वातल है· अ- और कछक रसायन है ॥ ६ ॥

अथ साधारण मोरके मांसका गुण ॥

सुस्निग्धो श्लेष्मलो वृष्यो घनः शुक्रविवर्द्धनः ॥
मांसवृद्धिकरो वल्यो द्वितीयश्च मयूरकः ॥ ७ ॥

साधारण मोरका मांस सुंदर चिकना है कफको करता है वीर्यमें हित है कठिन है वीर्यको वढाता है मांसको वढाता है वलमें हित है ॥ ७ ॥

अथ मुर्गाके मांसका गुण ॥

तथैव कुक्कुटो ज्ञेयो मधुरश्च गुणात्मकः ॥ ८ ॥

मुर्गाका मांसभी मोरका मांसके समान गुणोंवाला है और मधुर है ॥ ८ ॥

अथ कपोतके मांसका गुण ॥

कपोतो वृंहणो वल्यो वातपित्तविनाशनः ॥
तर्पणः शुक्रजननो हितो नृणां रुचिप्रदः ॥ ९ ॥

कपोतका मांस धातुओंको पुष्ट करता है वलमें हित है वातको और पित्तको नाशता है तृप्तिको करता है वीर्यको वढाता है और मनुष्योंके रुचिको देता है ॥ ९ ॥

अथ परेवाके मांसका गुण ॥

तथा पारावतो ज्ञेयो वातश्लेष्मकरो गुरुः॥ वल्यो वृष्यो रुचिकृच्च तथा हारीतको मतः ॥ १० ॥ पोतको भङ्गिका क्षुद्रा तथाच कुनटी तथा ॥ एते तुल्यगुणा ज्ञेया लघुवातापहारिणः ॥ ११ ॥

परेवाका मांस वातको और कफको करता है भारा है वलमें हित है वीर्यमें हित है रुचिको करता है और ऐसेही गुणोंवाला तिलजिरुपक्षीका मांस है ॥ १० ॥ और पीत्तक–इंद्रगोप–मधुमाखी–कुनटी इन च्यारोका मांस समान गुणोंवाला है हलका है और वातको हरता है ॥ ११ ॥

अथ ककेराके मांसका गुण ॥

लघुश्च क्रकरो ज्ञेयः कायाग्निवर्द्धनो भृशम् ॥ १२ ॥

ककेराका मांस हलका है शरीरकी अग्निको वढाता है ॥ १२ ॥

अथ खातीचिडाके मांसका गुण ॥

तथा लघुर्वातहरः काष्ठकूटोऽग्निवर्द्धनः ॥ वातश्लेष्माधिको ज्ञेयः शीतलः शुक्रवर्द्धनः॥१३॥अश्मरीं हन्ति विशदो वलकृन्मांसतर्पणः॥१४॥

खातीचिडाका मांस हलका है वातको हरता है और जठराग्निको वढाता है वात और कफकी अधिकतासे संयुक्त है शीतल है और वीर्यको वढाता है ॥ १३ ॥ पथरीको हरता है सुंदर है वलको करता है मांसको काटता है ॥ १४ ॥

अथ चकोर, तोता, मैंना इन्होंके मांसका गुण ॥

चकोरोऽथ तथा शारी समदोषौ गुणागुणैः ॥ १५ ॥

चकोर, तोता, मैंना, इन्होंकाभी मांस गुण और दोषोंसे समान है ॥ १५ ॥

अथ कुंजके मांसका गुण ॥

क्रौंचो वृष्योऽतिरुचिकृदश्मरीं हन्ति नित्यशः ॥
शोषमूर्च्छाहरो वृष्यो हन्ति कासमरोचकम् ॥ १६ ॥

कुंजका मांस वीर्यमें हित है ज्यादे रुचिको करता है निश्चय पथरीको हरता है और शोष, मूर्च्छा, खांसी, अरुचि, इन्होंको नाशता है ॥ १६ ॥

अथ कोयलके मांसका गुण ॥

कोकिलः श्लेष्मलो ज्ञेयः पित्तसंशमनो मतः ॥ १७ ॥

कोयलका मांस कफको करता है वलमें हित है और वीर्यको वढाता है ॥ १७ ॥

अथ विवृताक्षके मांसका गुण ॥

विवृताक्षस्त्रिदोषघ्नो वल्यः शुक्रविवर्द्धनः ॥ १८ ॥

विवृताक्षका मांस त्रिदोषको नाशता है वलमें हित है और वीर्यको वढाता है ॥ १८ ॥

अथ घरका वत्तकके मांसका गुण ॥

गृहस्य चटको वृष्यो वलशुक्रविवर्द्धनः ॥ सर्वदोषहरश्चापि दीपनो मांसवर्द्धनः ॥१९॥ इति आत्रेयभाषिते हारितोत्तरे स्थलचराणां मांसवर्गो नाम एकविंशोऽध्यायः ॥ २१ ॥

घरके वत्तकका मांस वीर्यमें हित है वल और वीर्यको वढाता है सव दोषोंको हरता है अग्निको जगाता है और मांसको वढाता है ॥ १९॥ इति वेरीनिवासिवुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने स्थलचराणां मांसवर्गोनाम एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

### अथ जलचरोंका मांसवर्ग

#### प्रथम हंसआदि जलके पक्षियोंके मांसका गुण

हंसः श्लेष्मकरो बलातिरुचिदो वृष्यो गुरुः शीतलस्तद्वच्च कण्ठजाड्य शुक्रजननो वृष्योऽतिरुच्यो मृदुः ॥ ज्ञेयः सारसकः कफानिलहरो वृष्यो गुरुश्चोच्यते वृष्यो वीर्य्यविवर्द्धनः कफहरः कङ्कस्तथा भासकः ॥ १ ॥

हंसका मांस कफको करता है बलको और अति रुचिको देता है वीर्यमे हित है भारा है और शीतल है सारसका मांस हंसका मांसके समान गुणोंवाला है कंठमें जडपनेको और वीर्यको करता है वीर्यमें हित है रुचिमें हि। है और कोमल है कफको और वातको हरता है और भारा है कंक और भासपक्षीका मांसमें हित है और वीर्य्यको बढाता है ॥ १ ॥

#### आडी आदि पक्षीके मांसका गुण ॥

आडी वातविकारकासहननी बल्या वृषा दीपनी क्रौञ्ची चासुरिशुक्रदोषहननी तुल्यस्तथा कर्कटः ॥ दात्यूहो मरुतस्य नाशनकरो वृष्यो बलःशुक्रदस्तथा श्रेष्ठगुणः श्रमोपशमनः शुक्रप्रदो वातहा ॥ २ ॥

वातका विकार और खांसीको हरता है बलमें और वीर्यमें हित है और अग्निको जगाता है कुंजका मांस और आसुरीका मांस वीर्यके दोषको हरता है और इसीके समान गुणोंवाला कांकडपक्षीका मांस है और करढोंक पक्षीका मांस वातको नाशता है वीर्यमें हित है बलको और वीर्य्यको देता है और श्रेष्ठ गुणोंवाला है परिश्रमको शांत करता है ॥ २ ॥

#### अथ मकर मच्छके मांसका गुण ॥

मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः ॥
रुचिप्रदः शुक्रकरश्चाश्मरीदोषनाशनः ॥ ३ ॥

सबप्रकारके मच्छोंके मांसोंमें मकरमच्छका मांस श्रेष्ठ है अग्निको जगाता है वातको नाशता है रुचिको देता है वीर्य्यको करता है और पथरी दोषको नाशताहै ॥ ३ ॥

#### अथ मच्छके मांसका गुण ॥

शृङ्गी वातविनाशनो रुचिकरो वृष्यः कफघ्नो मतस्तस्माद्रोहितको हितो बलकरो वातात्मकःश्लेष्मकः ॥ ४ ॥ श्लेष्माकरी तु शफरी

नलमीनः कफात्मकः ॥ शकुली च विशाला च ज्ञेयौ वातकफात्मकौ ॥ विलं विमत्स्यं ज्ञेयश्च वातपित्तकफाकरम् ॥ ५ ॥

शृंगीमच्छका मांस वातको नाशता है रुचिको करता है वीर्यमें हित है वात और कफकी प्रकृतिवाला है ॥ ४ ॥ शफरी मछली कफको करती है नलनामक मच्छ वातकी प्रकृतिवाला है शकुली और विशालानामवाली दोनों मच्छली वात और कफकी प्रकृतिवाली है विल और विमत्स्यनामवाले मच्छ वात, पित्त, कफ, इन्होंको नाशते है ॥ ५ ॥

अथ कच्छुवाके मांसका गुण ॥

कच्छपो मधुरः स्वादुः शुक्रवृद्धिकरो मतः ॥
वातश्लेष्मप्रजननो बृंहणो रूक्ष एव च ॥ ६ ॥

कछुवाका मांस मधुर है स्वादु है वीर्यको वढाता है वात और कफको उपजाता है धातुओंको पुष्ट करता है और रूखा है ॥ ६ ॥

अथ खेंकडाके मांसका गुण ॥

कुलीरोऽतिबलो वृष्यः पाण्डुक्षयविनाशनः ॥
शोफातिसारग्रहणीस्थविराणां स्त्रियां हितः ॥ ७ ॥

खेंकडाका मांस ज्यादै वलको करता है वीर्यमें हित है धातुओंको पुष्ट करता है और रूखा है और शोजा, अतीसार, संग्रहणी दोष, इन्होंसे पीडित और बूढा और स्त्री इन्होंको हित है ॥ ७ ॥

अथ मांसविशेषता

मकरो दीपनो हृद्यो ग्राही चोष्णविकारहा ॥
मूत्राश्मरीणां शमनो गुल्मातीसारनाशनः ॥ ८ ॥

मकर मच्छका मांस अग्निको जगाता है सुंदर है कबजको करता है गर्म विकारको नाशता है मूत्ररोग और पथरीको शांत करता है गुल्म और अतीसारको नाशता है ॥ ८ ॥

अथ वर्जनीय मांस

वककाकारिश्येनशूकरखरोष्ट्राश्वादयो भल्लुका व्यालाः सौरभेयप्रभृतयश्च ये चान्ये जीवा नृणाम् ॥ मण्डूकाश्च सरीसृपादिकगणा यूकाः कलिङ्गाश्च ये काकसारसशारिकाः शुका इमे भक्ष्या न शस्ता इमे ॥ ९ ॥ गृहचटकचकोराः काकजात्याश्च श्येनाः पिकशुकमधशारीभृङ्गदात्यू

हमाङ्गाः ॥ जलकरटकपोतपोटकीखञ्जरीटाः कुकुरमघमलिङ्गा यूकपिङ्गादयश्च ॥ १० ॥ एते भक्ष्या नैव भक्ष्या न चेष्टा ये चान्येऽप्यज्ञातनामाण्डजाश्च ॥ अन्ये चापि श्वापदा ये च निन्द्यास्ते च खाद्ये वर्जिताश्चात्र सर्वे ॥ ११ ॥ इति आत्रेयभाषिते हारीतोत्तरे मांसवर्गो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

काक, बाज, शिकरा, गधा, शूर, उंट, कुत्ता, रीछ, भेडिया, गाय, बैल, आदि और मेंडक, सर्प आदि समूह, जूम, धूम्याटपक्षी, सारस, मैना, तोता, इन्होंके मांस खानेमें वर्जित है ॥ ९॥ और घरमें रहनेंवाली वत्तक, चकोर, काककी जातीके पक्षी, शिकराकी जातीके पक्षी, कोयल, तोताकी जातीके पक्षी, मघा, शारी, भोरा, करढोंकपक्षी, मांग, शंखका जीव, कबूतर, पोटकी, खंजना, कुत्ता, मघ, मलिंग, जूम, पिंगापक्षी ॥ १० ॥ इन्होंके मांस खानें और चेष्टाके योग्य नहीं है और जो जो निंदित जीव है तिन्होंके भी मांस वर्जने चाहिये ॥ ११ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने मांसवर्गो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ॥ २३ ॥

### अथ अन्नपानवर्ग ॥

### प्रथम मंडका गुण ॥

मण्डः परिस्रवो भक्तस्तर्पणो वातनाशनः ॥ मूत्रमेहसमीरघ्नो रुचिकृन्मूत्रलो मतः ॥ १ ॥ आशुमण्डो भवेद् ग्राही मधुरो वा कफात्मकः ॥ तर्पणः क्षयदोषघ्नः शुक्रवृद्धिकरः परः ॥ २ ॥

मंड झिरानेंवाला है तृप्तिको करता है वातको नाशता है मूत्र, मेह, और वातको नाशता है रुचिको करता है और मूत्रको उपजाता है ॥ १ ॥ शीघ्रकिया मंड कब्जको करता है मधुर है कफकी प्रकृतिवाला है तृप्तिको करता है क्षय दोषको नाशता है और वीर्यको बढाता है ॥ २ ॥

### अथ भातका गुण ॥

अप्रसाधितभक्तो युगन्धराणां भक्तश्च घनो विशदमाधुरश्च ॥
कफे त्रिदोषशमनश्च कथ्यते कासश्च श्वासात्मक एव स स्मृतः ॥३॥

नहीं साधित किया और दो तरहसे मिलाहुआ भात कठिन है सुंदर है मधुर है कफमें हित है त्रिदोषको नाशता है खांसीको और श्वासरोगको हरता है ॥ ३ ॥

## अथ यवागू अर्थात् गुडपाणीका गुण ॥

सन्दीपनी स्वेदकरा यवागूः सम्पाचनी दोषमलामयानाम् ॥
सन्तर्पणी धातुवलेन्द्रियाणां शस्ता भवेत्स्याज्ज्वररोगिणाञ्च ॥ ४ ॥

यवागू पसीनाको लाती है अग्निको जगाती है और दोष, आम, वल, इन्होंको पकाती है और धातु, वल, इंद्रिय, इन्होंको तृप्ति करती है और ज्वररोगवालोंको श्रेष्ठ है ॥ ४ ॥

## अथ यवागूका लक्षण ॥

भागैकश्च भवेत् तत्र द्विभागेन जलं क्षिपेत् ॥ चित्रकं पिप्पलीमूलं पिप्पली चव्यनागरम् ॥ ५ ॥ धान्यकस्य समांशानि पिष्ट्वा श्वेतासित ण्डुलान् ॥ संशुद्धा शिथिला किञ्चित् सा यवागूर्निगद्यते ॥ ६ ॥ यवागूमुपभुञ्जानो जनो नारुचिमाचरेत् ॥ शाकमाषफलैर्युक्ता यवागूः स्याच्च दुर्जरा ॥ ७ ॥

एक भाग द्रव्य और दो भाग पानी मिलावे और चीता, पीपलामूल, पीपल, चव्य, सूंठ, ॥५॥ धनियां, ये सब समभाग लेने सफेद और दूसरे रंगके चावल इन सबोंको पीस मिलाकै पकावै कछुक पतली रहै तिसको यवागू कहतेहै ॥ ६ ॥ यवागूको भोजन करताहुआ मनुष्य अरुचिको नहीं प्राप्त होता और शाक, उडद, फल, इन्होंसे युक्तकरी यवागू दुर्जर होती है ॥ ७ ॥

## अथ मंडका गुण ॥

पञ्चकोलकधान्याकैर्युक्तो रास्नान्वितः पुनः ॥
मण्डस्त्रिदोषशमनो ज्वराणां पाचनः परः ॥ ८ ॥

पीपल, पीपलामूल, चव्य, चीता, सूंठ, धनियां, रायशन, इन्होंसे युक्त किया मंड त्रिदोषको नाशता हैं और ज्वरोंको पकाता है ॥ ८ ॥

## अथ खीरका गुण ॥

पायसं गुरु विष्टम्भजननं श्लेष्मवातलम् ॥
पित्तसंशमनं वल्यं वृष्यं श्रेष्ठं रसायनम्॥ ९ ॥

खीर भारा है विष्टंभको करती है कफ और वातको करता है पित्तको शांत करता है वलमें और वीर्य्यमें हित है श्रेष्ठ है और रसायन है ॥ ९ ॥

अथ खीचडीका गुण ॥

गुरुर्विष्टम्भजननो वातश्लेष्मकरः स्मृतः ॥ पित्तसंशमनो वल्यो वृष्य श्चैव बलप्रदः ॥ १० ॥ मुद्गस्तण्डुलसंयुक्तो माषतण्डुलवान् पुनः ॥ अन्यथा धान्यगुणवान् लक्ष्यते च भिषग्वर! ॥ ११ ॥ तिलानां संयुतो हृद्यो धातुपुष्टिविवर्द्धनः ॥ गुरुर्विटम्भमलकृद् दुर्जरः श्लेष्मकोपनः॥१२॥

खीचडी भारा है विष्टंभको करती है वातको और कफको करती है पित्तको शांत करती है बलमें और वीर्य्यमें हित है और बलको देती है ॥ १० ॥ चावलोंसे युत हुई अथवा चावल और उडदोंसे युतहुई खीचडीके ये गुण है अन्यतरहकी खीचडो अन्नके गुणको देती है ॥ ११ ॥ तिलोंकी खीचडी सुंदर है धातुओंकी पुष्टिको वढाती है भारा है विष्टंभको और मलको करती है दुर्जर है कफको कोपती है ॥ १२ ॥

अथ दालका गुण

सूपश्चोक्तस्त्रिदोषघ्नो व्यञ्जितश्चैव सर्पिषा ॥
धातुपुष्टिकरः श्रेष्ठो बृंहणो बलवर्द्धनः ॥ १३ ॥

दाल त्रिदोषको नाशती है और घृतमें भूनी अथवा छौंकीहुई दाल धातुओंकी पुष्टिको करती है श्रेष्ठ है धातुओंको और बलको वढाती है ॥ १३ ॥

अथ खलका गुण ॥

वातकफकरो हृद्यः खलको बलकारकः ॥ १४ ॥

तिलोंका खल वातको और कफको करता है सुंदर है और बलको करता है ॥ १४ ॥

अथ अनारका पन्ना ॥

कफानिलहरो हृद्यो दीपनो दाडिमाम्लकः ॥ १५ ॥

अनारका पन्ना कफको और वातको हरता है सुंदर है और अग्निको जगाता है ॥१५॥

अथ पापडका गुण ॥

पर्पटस्तैलसंभृष्टो दोषाणाञ्च ज्वरापहः ॥
रुचिकृद्बलकृच्चैव दाहशोषतृषापहः ॥ १६ ॥

तेलमें भुनाहुआ पापड दोषोंसें उपजे ज्वरको नाशता है रुचिको और बलको करता है और दाह, शोष, तृषा, इन्होंको नाशता है ॥ १६ ॥

अथ संडाकीका गुण ॥

सण्डाकी च गुरुस्निग्धा दुर्जरा गुरुशीतला ॥
पित्तश्लेष्मकरा वल्या धातूनाञ्च बलप्रदा ॥ १७ ॥

संडाकी भारी है चिकनी है दुर्जर है अति शीतल है पित्तको और कफको करती है वलमें हित है और धातुओंके बलको देती है ॥ १७ ॥

अथ उडद आदिके वडोंका गुण ॥

दुर्जरा मधुरा रुच्या वटिका माषकादिभिः ॥ १८ ॥

उडद आदिके वडे दुर्जर हैं मधुर हैं रुचिमें हित हैं ॥ १८ ॥

अथ शिखरणका गुण ॥

गुडदधिप्रमुदिता हिता शिखरिणी नृणाम ॥
धातुवृद्धिकरा वृष्या वातपित्तविनाशिनी ॥ १९ ॥

गुड और दहीसे बनीहुई शिखरण मनुष्योंको हित है धातुओंको बढाती है वीर्यमें हित है वातको और पित्तको नाशती है ॥ १९ ॥

अथ शीधुका गुण ॥

शीतलः पित्तशमनो भ्रममूर्च्छातृषापहः ॥
खण्डेन संयुतः श्रेष्ठो घृतयुक्तो जलाधिकः ॥ २० ॥

शीधु शीतल है पित्तको शांत करता है और भ्रम, मूर्च्छा, तृषा, इन्होंको नाशता है और खांड तथा घृतसे संयुक्त और पानीकी अधिकतासे संयुक्त ऐसा शीधु श्रेष्ठ है ॥ २० ॥

अथ मंथका लक्षण और गुण ॥

शक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ॥ नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥ २१ ॥ मन्थः सद्यो बलच्छर्दिपिपासादाहनाशनः ॥
साम्लः स्नेहश्च सगुडो मूत्रकृच्छ्रस्य साधनः ॥ २२ ॥

घृतमें भुनेहुये सत्तुओंमे पानी मिलाके ऐसा बनावै जो न अति पतला और न अति कठिन हो तिसको मंथ कहते है ॥ २१ ॥ तत्कालका बनाया मंथ बल, छर्दि, पिपासा, दाह, इन्होंको नाशता है खट्टा है स्नेहन है और गुड सहित मंथ मूत्रकृच्छ्रको साधता है ॥ २२ ॥

अथ मांसका गुण ॥

सिद्धं मांसं वेसवारेण युक्तं बल्यं श्रेष्ठं स्वादु संदीपनञ्च ॥ त्रिदोषशमनं गुरु लवणस्नेहयुक्तं दुर्जरं दीपनं स्मृतम् ॥ २३ ॥

सिद्ध किया और वेसवारसंज्ञक मसालासे संयुक्त किया मांस बलमें हित है श्रेष्ठ है स्वादु है अग्निको जगाता है त्रिदोषको शांत करता है भारा है नमक और स्नेहसे संयुक्त किया मांस दुर्जर है और अग्निको जगाता है ॥ २३ ॥

अथ मांसकी श्रेष्ठता ॥

नहि मांससमं किञ्चिदन्यद्देहमहत्त्वकृत् ॥
मांसादमांसं मांसेन संभृतत्वाद्विशिष्यते ॥ २४ ॥

शरीरकूं बढानेकेवास्तै मांससरीखा दूसरा कोई पदार्थ नहीं है. तिसमांसमेंभी जो प्राणी मांस खाते हैं उनप्राणिओंका मांस मांससें भरा रहता है. इसवास्तै वह बोहोत अच्छा होता है ॥ २४ ॥

अथ भूंजेहुए मांसका गुण ॥

अङ्गारैः परिपक्वञ्च दीपनं श्लेष्मनाशनम् ॥
बल्यञ्च स्नेहसंयुक्तं घनं घनगुणात्मकम् ॥ २५ ॥

मांस अग्निको जगाता है हलका है श्लेष्मको नाशता है. बलमें हित है और स्नेहसे संयुक्त किया यही मांस कठिन है और कठिन गुणवाला है ॥ २५ ॥

अथ मंडका गुण ॥

अत्युष्णं मण्डकं पथ्यं लघु चैव यथोत्तरम् ॥ त्रिकशूलपार्श्वशूलपरिणामापहंतथा ॥ तृष्णामारुतछर्दिघ्नमामाशयकरं तथा ॥ २६ ॥

मंड अति गर्म है पथ्य है, हलका है यह त्रिकशूल, पसलीशूल, परिणामशूल, इन्होंको नाशता है तृष्णा, वायु,छर्दि इन्होंको नाशता है. आमको बढाता है ॥ २६ ॥

अथ मांडाका गुण ॥

तप्तकर्परपक्वा या रोचनी मधुरा घना ॥
कफवृद्धिकरी बल्या पित्तरक्तप्रदायिनी ॥ २७ ॥

तप्तकिये तवेपर पकाया मांडा रुचिको करता है मधुर है कठिन है कफको बढाता है बलमें हित है पित्त और रक्तको देता है ॥ २७ ॥

अथ पूरी और घेवरका गुण ॥

पूरिका घृतपूरन्तु त्रिदोषशमनं परम् ॥
वृष्यं संबृंहणं स्वादु क्षतक्षयनिवारणम् ॥ २८ ॥

पूरी और घेवर त्रिदोषको शांत करता है वीर्यमें हित है धातुओंको पुष्ट करता है स्वादु है क्षत और क्षयको नाशता है ॥ २८ ॥

अथ गूंझ मालपुवाका गुण ॥

गुरूष्णो दुर्जरो ज्ञेयो वातश्लेष्मकरो गुरुः ॥
पूपकः श्लेष्मको हृद्यो वृष्यो वातानुलोमतः ॥ २९ ॥

मालपुआ भारा है दुर्जर है वातको और कफको करता है कफको करता है सुंदर है वीर्यमें हित है और वातको अनुलोमता है ॥ २९ ॥

अथ सोमालिकाका गुण ॥

सोमालिका घना स्वादू रोचनी बलवर्द्धनी ॥
दुर्जरा दोषशमनी वृथानुकरणी मता ॥ ३० ॥

सोमालिका पक्वान्न कठिन है स्वादु है रुचिको उपजाता है बलको बढाता है दुर्जर है दोषको शांत करती है और वीर्यमें हित है ॥ ३० ॥

अथ फेनीका गुण ॥

बृंहणी वातपित्तघ्नी पथ्या लघुतरा मता ॥
फेनिका रोचनी बल्या सर्वधातुबलप्रदा ॥ ३१ ॥

फेनी विष्टंभको करती है रुचिको उपजाती है बलमें हित है और सब धातुओंमें बलको देती है ॥ ३१ ॥

अथ भिन्न वडाका गुण ॥

विष्टम्भी मधुरो हृद्यो घनो वातकफात्मकः ॥
स सिक्तो वा त्रिदोषघ्नो दुर्जरो जायते पुनः ॥ ३२ ॥

भिन्नकिया वडा विष्टंभको करता है मधुर है सुंदर है कठिन है वातकी और कफकी प्रकृतिवाला है और सेचितकिया वडा त्रिदोषको नाशता है फिर दुर्जर होजाता है ॥ ३२ ॥

अथ अभिन्नवडाका गुण ॥

अभिन्नो दुर्जरो बल्यो घनतृष्णाप्रदः स्मृतः ॥
तीक्ष्णो विपाके विष्टम्भी दुर्जरो जायते पुनः ॥ ३३ ॥

नहीं भिन्न किया वडा दुर्जर है बलमें हित है ज्यादै तृषाको देता है तेज है पाककालमें विष्टंभी है फिर दुर्जर होजाता है ॥ ३३ ॥

अथ लड्डूका गुण ॥

कटुकास्तर्पणा बल्या दुर्जराःशोषकारकाः ॥ मन्दाग्नौ न प्रशस्यन्ते मोदका बहुवर्णकाः ॥ द्रव्यं गुणविशेषेण सारस्वादेन वा पुनः ॥३४॥

लड्डु चर्चरे है, तृप्तिको करते है बलमें हित है दुर्जर है शोषको करते है और मंदाग्निमें हित नहीं है बहुत वर्णवाले है अथवा द्रव्यका गुण विशेष करकै—व—सारस्वाद करकै लड्डु-कहे है ॥ ३४ ॥

अथ यवपोलिकाका गुण ॥

पोलिका कथिता बल्या कफदोषकरी मता ॥
वृष्या वीर्य्यप्रदा ज्ञेया दोषला वीर्य्यवर्द्धनी ॥ ३५ ॥
विदलान्नस्य या पर्णा सिद्धा कर्परकेण तु ॥
रुच्या वान्नविशेषेण दोषान् सर्वान् विभावयेत् ॥ ३६ ॥

जवोंकी पोली बलमें हित है कफदोषको करती है वीर्यमें हित है वीर्यको देती है दोषों-को उपजाती है और वीर्यको बढाती है ॥ ३५ ॥ और तंदूरपर पकाईहुई रोटी रुचिमें हित है ऐसेही अन्नका दोषके अनुसार सब पदार्थोंको विचारै ॥ ३६ ॥

अथ अन्नके गुणोंका उपसंहार ॥

अन्यानि चान्नपानानि नैवोक्तानि महामते ! ॥
ग्रन्थविस्तारभीरुश्च लोको वक्तुं न च क्षमः ॥ ३७ ॥

हे महामते ! अन्य अन्न और पान नहीं कहे है क्योंकि ग्रंथको बढजानेसे संसारके लो-क विचारनेको समर्थ नहीं हो सकेंगे ॥ ३७ ॥

अथ थकेहुए मनुष्यको भोजननिषेध ॥

श्रमात्तु भोजनं यस्तु पानं वा कुरुते नरः ॥
ज्वरः संजायते तस्य छर्दिर्वा तत्क्षणाद्भवेत् ॥ ३८ ॥

जो मनुष्य परिश्रमसे भोजनको अथवा पानको करता है तिसके शीघ्रही ज्वर अथवा छर्दि उपजती है ॥ ३८ ॥

अथ भोजनके उपरांत मेहेनत और सुरतका निषेध ॥

कृत्वा तु भोजनं सद्यो व्यायामं सुरतं तथा ॥
यः करोति विपत्तिः स्यात्तस्य गात्रस्य निश्चितम् ॥ ३९ ॥

जो मनुष्य भोजनको करकै तत्काल कसरतको अथवा मैथुनको करता है तिसके शरीरमें निश्चय दुःख होजाता है ॥ ३९ ॥

अथ थंडा और गरमभोजनका निषेध ॥

न चातिशीतं भुञ्जीत नात्युष्णं भोजने हितम् ॥
कुर्य्याद्वातकफौ शीतमुष्णं भवति सारकम् ॥ ४० ॥

अतिशीतलपदार्थको खावैनहीं और अतिगर्म भोजनभी हित नहीं है क्योंकि शीतल भोजन वातको और कफको करता है और गर्म भोजन दस्तावर है ॥ ४० ॥

श्रमितआदिकोंके भोजनका निषेध ॥

न श्रान्तो भोजनं कुर्य्यान्न व्यायामसमाकुलः ॥
विषमासने न भोक्तव्यं करोति विविधान् गदान् ॥ ४१ ॥

परीश्रमसे थकाहुआ और कसरतसे थकाहुआ मनुष्य भोजनको करै नहीं और विषम आसन बैठकै भोजनको करै नहीं ये अनेक प्रकारके रोगोंको करते हैं ॥ ४१ ॥

भोजनमें फलादिकोंका नियम ॥

आदौ फलानि भुञ्जीत वर्जयित्वा तु कर्कटीम् ॥
न नक्तं दधि भुञ्जीत भोजनार्द्धे न धावनम् ॥ ४२ ॥

काकडीके विना सब फलोंको आदिमें खावै रात्रिमें दहीको नहींखावै और आधा भोजन करकै कुल्लोंको नहीं करै ॥ ४२ ॥

भोजनके पीछे बैठनेका नियम ॥

भोक्तोपविशति स्थौल्यं बलमुत्तानशायिनः ॥
आयुर्वामकटिस्थस्य मृत्युर्धावति धावतिं ॥ ४३ ॥

जो भोजनको करकै बैठता है वह स्थूलपनेको प्राप्त हो जाता है और भोजन करकै सोधा शयन करनेंवालेकै बल बढता है और भोजन करकै वामें करवट शयन करनेंसे आयु बढता है और भोजन करकै दोडनेंसे मृत्यु दौडता है ॥ ४३ ॥

भोजनमें पानीका नियम ॥

नवादौ सलिलं पेयं भोजने पानमाचरेत् ॥ अर्द्धाहारेण भुञ्जीत तृतीयं व्यञ्जनेन तु ॥ ४४ ॥ चतुर्थं तोयपानेन पूर्णाहारः सुजायते ॥ ४५ ॥

भोजनकी आदिमें पानीको नहीं पीवै भोजन करतेहुये पानीको पीवै दो भागके कां४को भोजनसे पूरितकरै और तीसरे भागको व्यंजनसे पूरित करै ॥ ४४ ॥ और चौथे भागको पानीसे पूरित करै ऐसे पूर्ण भोजन होता हैं ॥ ४५ ॥

भोजनके ऊपर व्यायाम ॥

भोजनोर्ध्वं चंक्रमते शतपादं शनैः शनैः ॥
पश्चादुत्तानशयनं ततो वामे क्षणं स्वपेत् ॥ ४६ ॥

और भोजन करकै सौं १०० पैर होलें २ चलै पीछे सीधा शयनकर पीछे वामें करवट दो घडी शयन करै ॥ ४६ ॥

अथ भोजनके उपरांत नेत्रादिकोंका मार्जन ॥

भुक्त्वोपरि समाचम्य मार्जयेद्दक्षिणाकरैः ॥
पुनर्दक्षिणहस्तेन मार्जयेदुदरं सुधीः ॥ ४७ ॥

भोजन करकै पीछे आचमनले दाहिने हाथसे मुखको शुद्ध करै पीछे दाहिने हाथ करकै बुद्धिमान् पेटको शोधित करै ॥ ४७ ॥

अथ अडकारका नियम ॥

उद्गीरयेत्समुद्गारं न चोद्गारस्य धारणा ॥ ४८ ॥

अडकारको अच्छी तरह लेवै क्योंकि अडकारको धारित करना अच्छा नहीं ॥ ४८ ॥

अथ व्यायामादिकोंका नियम ॥

व्यायामश्च व्यवायश्च धावनं पानमेव च ॥ युद्धं गीतश्च पाठश्च क्षणभुक्तो विवर्जयेत् ॥ ४९ ॥ न सद्यःपीते पठनं गमनं न च कारयेत् ॥ न वा वाहनमारोहं विवादं न च कारयेत् ॥ ५० ॥

और भोजन करकै दो घडीतक कसरत, मैथुन, दंतधावन आदि शुद्धि, जलआदिका पान इन्होंको और कुशती आदि युद्ध, गाना, पढाना, इन्होंको वर्ज्जै ॥ ४९ ॥ और तत्काल पानीको पीकै पठन और गमनको न करै भोजन करकै वोझाको उठावै नहीं और सवारी आदिपर चढै नहीं और विवादको करै नहीं ॥ ५० ॥

अथ दिनमें शयन करनेका निषेध ॥

दिवास्वापं न कुर्य्यात्तु भुक्त्वोपरि च विश्रमेत् ॥ अकालशयनाच्छ्लेष्मा प्रतिश्यायः प्रपीनसः ॥ ५१ ॥ क्षयशोफशिरोऽर्त्तिश्च जायते चाग्निमदन्ता ॥ ५२ ॥

और दिनमें शयनको करै नहीं किंतु भोजनकरकै विश्राम करै अकालमें शयन करनेसे कफ, खेहर, पीनसरोग ॥ ५१ ॥ क्षय, शोजा, शिरमें पीडा– मंदाग्नि ये उपजते हैं ॥ ५२ ॥

अथ दिनमें शयन करानें लायक मनुष्य ॥

मद्यपीते परिश्रान्ते हिक्काश्वासातुरेषु च ॥ भयशोकक्षुधार्त्तानां पठनान्मैथुनेन च ॥ ५३ ॥ तथैव वृद्धबाले च भाराक्रान्ते तथातुरे ॥ अतीसारे च शोफे च तृष्णापानात्ययेऽपि च ॥ ५४ ॥ ग्रीष्मे वाल्ये निशादग्ने दिवास्वप्नं हितं भवेत् ॥ ५५ ॥ इति आत्रेयभाषिते हारीतोत्तरे अन्नपानवर्गो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ प्रथमस्थानं समाप्तम् ॥ १ ॥

मद्यपान करनेमें, परीश्रमसे थकनेमें, हिचकी और श्वासकी पीडामें, भय. शोक, भूख, इन्होंमें , पठन और मैथुनमें ॥ ५३ ॥ वृद्धपना और बालकपनामें, वोझासे थकेहुयेमें, रोगमें, अतीसार और शोजामें, तृषा और पानात्यय रोगमें ॥ ५४ ॥ ग्रीष्मऋतुमें रात्रिके जागनेमें दिनको शयन करना हित है ॥ ५५ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां प्रथमस्थाने अन्नपानवर्गो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

––यहां प्रथमस्थान समाप्त हुआ––

# अथ द्वितीयस्थान ॥

## प्रथमोऽध्यायः ॥१॥

आत्रेय उवाच ॥ अथातः संप्रवक्ष्यामि द्वितीयस्थानमुत्तमम् ॥ शुभाशुभानि स्वमानि स्वास्थ्यारिष्टानि मानुषे ॥ १ ॥ शृणु पुत्र ! समासेन यथा वत्स ! प्रकाश्यते ॥ २ ॥

अथ आत्रेयजी कहते हैं–अब उत्तमरूपी द्वितीयस्थानको कहताहूं मनुष्योंके शुभ, अशुभ, स्वम, स्वस्थपना, अरिष्ट ॥ १॥ इन्होंको हे पुत्र ! विस्तारसे सुन जैसे हे वत्स ! प्रकाशितकिया जाता है ॥ २ ॥

हारीत उवाच ॥ ज्ञातं मया महाप्राज्ञ ! अन्नपानं तथोत्तमम् ॥ इदानीं ज्ञातुमिच्छामि रोगाणां रोगविज्ञताम् ॥ ३ ॥ कर्मजा व्याधयो ये च तान्वद त्वं महामते ! ॥ ४ ॥

अथ हारीत पूछता है–हे महाप्राज्ञ ! अन्नपानकी विधि मैंनें जानी अब रोगवालोंके रोगोंको जाननेंकी इच्छा करताहूं ॥३॥ हे महामते ! कर्मसे जो व्याधि उपजती है तिन्होंको आप कहो ॥ ४ ॥

आत्रेय उवाच ॥ कर्मजा व्याधयः सर्वे भवन्ति हि शरीरिणाम् ॥ सर्वे नरकरूपाः स्युः साध्यासाध्या भवन्त्यमी ॥ ५ ॥ अज्ञातं यत्कृतं पापं पश्चात्कृच्छ्रे समाचरेत् ॥ प्रायश्चित्तबलेनापि साध्यरूपो भवेद्गदः ॥ ६ ॥ क्रियते ज्ञातरूपेण यत्पश्चात्कृच्छ्रमाचरेत् ॥ प्रायश्चित्तेन प्रान्ते तु कष्टसाध्यो भवेद्गदः ॥ ७ ॥ ब्रह्मघ्नगोघ्नधरणीपतिघातकश्च आरामतोयधरनाशकपारदाराः ॥ स्वाम्यङ्गनागुरुवधूकुलजाभिगामी एते त्रयोदश प्रबलरूपधरा गदाश्च ॥ ८ ॥ पाण्डुः कुष्ठं राजयक्ष्मातिसारो मेहो मूत्रं चाश्मरी मूत्रकृच्छ्रम् ॥ शूलः श्वासः कासशोफव्रणाश्च दोषाश्चैते पाप

और इसके खानेंसे वृद्धपुरुषभी जंवान होके स्त्रीके संग रमण करता है ॥ १२८ ॥ वंध्या स्त्री पुत्रको प्राप्त होजाती है और नपुंसकभी पुरुषकी तरह आचरण करता है यह तालका म्रातकनामवाला औषध कृष्णात्रेयजीने कहा है ॥ १२९ ॥

## अथ गुडूच्यादिचूर्ण ॥

गुडूची च बले द्वे च धात्री च मरिचानि च ॥
चूर्णं गुडेन संयुक्तं राजयक्ष्मापहं नृणाम् ॥ १३० ॥

और गिलोय दोनों प्रकारकी खरैहटी, आंवला, मिरच, इन्होंका चूर्ण गुडमें मिला खानेंसे राजयक्ष्मारोगका नाश होता है ॥ १३० ॥

## अथ क्षयरोगपर पथ्यापथ्य ॥

शालिषष्टिकगोधूमवास्तुकं जाङ्गलानि च॥ मुद्गांश्च गोपयश्चैव शशैकेण कुरङ्गिणाम् ॥ १३१ ॥ तित्तिरक्रौञ्चलावानां वार्त्ताकपिच्छकच्छागला नां हि ॥ कथितानि मांसादीनि प्रलेपकानि जगति च ॥ १३२ ॥ विभोजयेत्क्षीरसर्पिः क्षये वा राजयक्ष्मिणः ॥ क्षाराम्लकटुकं तीक्ष्णं तैलं सौवीरकं सुरा॥ राजिकावर्जिताश्चैते क्षये वा राजयक्ष्मिणः॥१३३॥ इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने क्षयरोगचिकित्सा नाम नवमोऽध्यायः ॥ ९ ॥

और शालीसंज्ञक तथा सांठीचावल, गेहूं, वथुवाका शाक, जांगलदेशके जीवोंका मांस, मूंग, गौका दूध, और शूसा, कालाहिरन, हिरन ॥ १३१ ॥ तीतर, कूंजि, लावा, वत्तक, मोर, वकरा, इन्होंका मांस, इनसवोंका भोजन करना श्रेष्ठ कहा है ॥ १३२॥ और राजयक्ष्मा रोगमें तथा क्षयरोगमें दूध और घृतका भोजन करना श्रेष्ठ कहा है और खारा, खट्टा, चर्चरा, तीक्ष्ण, ऐसा पदार्थ, तेल, कांजी, मदिरा राई ये क्षयमें तथा राजयक्ष्मा रोगमें वर्ज देनें चाहिये ॥ १३३ ॥ इति वेरीनिवासिवुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां तृतीयस्थाने क्षयरोगचिकित्सानाम नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ॥ १० ॥

## अथ रक्तपित्तका निदान और चिकित्सा ॥

अतिघर्मतक्रम् ॥ तीक्ष्णोष्णकटुसेवनात् ॥ क्षाराम्

पानादिसेवनात् ॥ १ ॥ अतिव्यवायाच्छीतेन शुष्कशाकादिसेवनात् ॥ एतैस्तु कुपितं पित्तं रक्तेन सह मूर्च्छितम् ॥ २ ॥ पुत्रस्तु संशयापन्नः पप्रच्छ पितरं पुनः ॥ ३ ॥

आत्रेयजी कहते हैं—अत्यंत घामसे और तीक्ष्ण तथा गरमवस्तुके सेवनेंसे और खारा खट्टा पदार्थके सेवनेंसे तथा मदिराके सेवनेंसे ॥ १ ॥ अत्यंत मैथुनके सेवनेंसे, शीतलपदार्थके सेवनेंसे कुपितहुआ पित्तरक्तके संग मूर्च्छाको प्राप्तहोजाता है ॥ २ ॥ ऐसे सुन संशयमें युक्तहुआ हारीत आत्रेयजीसे पूछता है ॥ ३ ॥

हारीत उवाच ॥ कथं पित्तं प्रकुपितं केन वापि प्रचाल्यते ॥ तद्वद्रक्तं प्रकुपितं जायते केन हेतुना ॥ ४ ॥ युगपद्दृश्यते केन कथं वापि प्रवर्त्तते ॥ एवं पृष्टो महाचार्य्यः प्रोवाच मुनिपुङ्गवः ॥ ५ ॥

हारीत कहते हैं— पित्त कैसे कुपित होता है और किससे चलायमान होता है और तैसें रक्तका कोप किस कारणसे होता है ॥ ४ ॥ एकवार किसहेतुसे दीखते हैं और कैसे प्रवृत्त होते हैं ऐसे पूछेहुए महाचार्य उत्तममुनि कहते भये ॥ ५ ॥

आत्रेय उवाच ॥ शृणु प्राज्ञ! महातेजश्चिकित्सागमपारग! ॥ येनैव कुप्यते पित्तं तेनैव कुप्यते तथा ॥ ६ ॥ तावत्प्रकुपिते कोष्ठे वायुर्दारयते भृशम् ॥ ऊर्ध्वं च नयते प्राणश्चापानोऽपानमीरति ॥ ७ ॥ मध्ये समानः कुरुते रक्तपित्तस्य कोपनम् ॥ एवं युगपत्पित्तश्च रक्तेन सह कुप्यति ॥ ८ ॥ चतुर्द्धा दृश्यते कोपो गतिश्चास्य द्विधा मता ॥ ऊर्ध्वश्लेष्मणि संसृष्टं नासास्ये कर्णरन्ध्रयोः ॥ ९ ॥ रक्तं प्रवर्त्तते यस्य साध्यास्तु विजिगीषुणा ॥ अधोयातेन संसृष्टं गुदेनापि प्रवर्त्तते ॥ १० ॥ स ज्ञेयो रक्तपित्तस्तु कृच्छ्रेण सिद्धिमिच्छति॥ उभाभ्यामधऊर्ध्वाभ्यां वातश्लेष्मणि वर्त्तते ॥ ११ ॥ तमसाध्यं विजानीयात्कृच्छ्रेण यदि सिध्यति ॥ १२॥ एकमार्गबलतो वा नाभिवेगेन चोत्थितः ॥ रक्तपित्तः सुखेनापि साध्यः स्यान्निरुपद्रवः॥ १३ ॥ एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते॥ असाध्यस्तु त्रिदोषेषु रक्तपित्तः प्रवर्त्तते॥१४॥ ऊर्ध्वगरक्तपित्तेषु विरेकं कारयेत्सुधीः ॥ अधोभागगते रक्ते तदास्य वमनं हितम् ॥ १५ ॥

आत्रेयजी कहते हैं–हे प्राज्ञ! महातेजवाला! वैद्यकशास्त्रके पारको जाननेवाला! तूं सुन जिसकारणसे पित्त कुपित होता है तिसीकारणसे रक्त कुपित होता है ॥ ६ ॥ पहले कोष्टस्थानमें पित्त कुपितहोके वायुको अत्यंत फाडदेता है प्राण वायु ऊपरको प्राप्त होजाता है और अपानवायु गुदाके स्थानमें कुपित होजाता है ॥ ७ ॥ और मध्यनाभिमें स्थितहुआ समान वायु रक्तपित्तको कोपकरदेता है इसीतरह एकहीवार पित्त रक्तके संग कुपित होजाता है ॥८॥ रक्तपित्तका कोप चारप्रकारसे दीखता है और इसकी गति दोप्रकारकी कही है जिसकै कफ ऊर्ध्वभागमें प्राप्तहो और नासिकाके आगे तथा कानोंके छिद्रोंमें ॥ ९ ॥ रक्त प्रवृत्त होजावे वह साध्य कहा है. और जिसकै अधोमार्गमें रक्तकोप होजाता है उसकै गुदाके द्वारा रक्त निकसता है ॥ १० ॥ वह रक्तपित्त कष्टसाध्य कहा है और जो ऊर्ध्वमार्गमें प्राप्तहो अथवा अधोमार्गमें प्राप्तहो और वात कफ अधिक वर्तते हों ॥ ११ ॥ वह असाध्य जानना अथवा कष्टसे सिद्ध होता है ॥ १२ ॥ एक मार्गसे उठाहुआ अथवा नाभिके देशसे उठाहुआ रक्तपित्त साध्य है और उपद्रवोंसे रहित है ॥ १३ ॥ और एकदोषसे उत्पन्नहुआ साध्य होता हैं दोदोषोंसे उत्पन्नहुआ याप्यरोग होताहै और तीनदोषोंसे उत्पन्न हुआ रक्तपित्त असाध्य कहाता है ॥ १४ ॥ और जब रक्तपित्त ऊर्ध्वभागमें प्राप्तहोवे तब जुलाब दिवावै और जब रक्त अधोभागमें स्थितहो तब वमन कराना चाहिये ॥ १५ ॥

## अथ रक्तपित्तके उपद्रव ॥

रोगक्षीणे छविरविकले हीनदौर्बल्यकाये मन्दाग्निर्वा क्षवथुरथवा पाण्डुता दाहशोषः ॥ तृष्णा छर्दिः श्वसनमधृतिर्भक्तविद्वेषमोहो हृत्पीडा स्याद्भ्रममथ भवेद्रक्तपित्तोपसर्गात् ॥ १६ ॥ अष्टादश इते प्रोक्ता रक्तपित्त उपद्रवाः ॥ उपद्रवैर्विना साध्योऽसाध्यः सोपद्रवस्तथा ॥१७॥ रक्तनिष्ठीवनोपेतो रक्तनेत्रो भ्रमातुरः॥रक्तमूत्रश्च वमते रक्तमूत्री न जीवति॥१८॥

रोगसे क्षीण होजावे और कांतिसे रहित होजावे,शरीर हीन होजावे और दुर्बल होजावे, मंद अग्नि होजावे, छीकहो, पांडुरोगहो, दाहहो, शोषहो,तृषाहो, छर्दिहो, श्वासहो, धीरज नहीं रहै, भोजनसे वैर रहै, मोह रहै, हृदमें पीडा रहै भ्रमहो, ऐसे ये ॥१६॥ अठारह रक्तपित्तके उपद्रव कहे हैं उपद्रवोंसे रहित रक्तपित्त रोग साध्य कहा है और उपद्रवोंसें संयुक्त रक्तपित्त असाध्य कहा है ॥ १७ ॥ और रक्तके थूकनेसे युक्तहो रक्तनेत्रहौं भ्रमसे आतुरहो और रक्तमूत्रवाला पुरुष वमन करता है, वह जीवता नहीं है ॥ १८ ॥

## अथ रक्तपित्तका लक्षण ॥

एवं प्रोक्तो निदानार्थस्ततो वक्ष्यामि भेषजम्॥ सुलक्षणसमायुक्तं रक्तपि

त्तंसुखावहम् ॥ १९ ॥ यस्यारुणं पवनफेनयुतं च तावत्पित्तातिकृष्णमथ पीतकुसुम्भकाभम् ॥ पित्तेन पित्तमिति तं प्रवदन्ति धीराः सान्द्रं सपाण्डु रतिजं सघनं कफेन ॥ २० ॥

इस प्रकार निदान तो कहदिया है अब औषध कहेंगे सुंदरलक्षणोंसे युक्त रक्तपित्त सुखसाध्य कहा है ॥ १९ ॥ जो झागों सहित थूकै वह वातसे उपजा रक्तपित्त जानना और पित्त अधिक होवे तो काला और कसुंभाके डहलके समान थूकै, तिसको पित्तसे उपजा रक्तपित्त कहते है और कफसे होवे तो करडा और पीला सफेद चिकना ऐसा थूकै ॥ २० ॥

अथ रक्तपित्तकी चिकित्सा ॥

क्षीणमांसं कृशं वृद्धं बालं वा ज्वरपीडितम् ॥
शोषमूर्च्छाभ्रमापन्नमतिरेचनमाचरेत् ॥ २१ ॥

क्षीणमांसवाला, कृश, वृद्ध, बालक, ज्वरसे पीडित शोष, मूर्च्छा भ्रम, इन्होंसे पीडित पुरुषको जुलाब दिवावे ॥ २१ ॥

अथ ऊर्ध्वरक्तका उपाय ॥

निष्पीड्य वासारसमाददीत क्षौद्रेण खण्डेन युतं च पानम् ॥ नासास्यकर्णे नयनप्रवृत्तं रक्तं तु शीघ्रं शमतां प्रयाति ॥ २२ ॥

अथवा वांसाके पत्तोंका रसको निचोडि तिसमें शहद और खांड मिला पीना चाहिये तिस्से नासिका, मुख कान इन्होंमें प्रवृत्तहुआ रक्त शीघ्रही शांत होजाता है ॥ २२ ॥

अथ वासादि क्वाथ ॥

वासाकषायोत्पलमृत्प्रियङ्गुरोध्राञ्जनाम्भोरुहकेसराणि ॥ पीत्वा समध्वा ससिता प्रयोज्या पित्ताश्रयं चैवमुदीर्णमाशु ॥ २३ ॥

और वांसाका क्वाथ, कमलकी जडकी मांटी, मालकांगनी, लोह, कालासहौंजना, कमलकेशर, इन्होंमें शहद और मिसरी मिला पीनेंसे रक्तपित्त शांत होता है ॥ २३ ॥

अथ निंबक्वाथ अथवा अडूसाका क्वाथ ॥

प्रविद्यमानं पिचुवासकेन कथं नरः सीदति रक्तपित्ते ॥ क्षये च कासे श्वसनेऽपि यक्ष्मे वैद्याः कथं नातुरमादरन्ति ॥२४॥

अथवा नींब और वांसाका क्वाथ देनेंसे रक्तपित्तवाला मनुष्य दुःख नहीं पाता है और

क्षयरोग, खांसी, श्वास, राजयक्ष्मा, इनरोगोंमेंभी वैद्यजनोंको यही क्काथ देना चाहिये॥२४॥

अथ वासाकी प्रशंसा ॥

भिषग्भिषजां माता या पुरा कृत्यक्रिया यदि ॥ क्रियायत्ते रक्तपित्ते क्षये कासे च सिद्धिदा ॥२५॥ वासायां विद्यमानायामाशायां जीवितस्य च ॥ रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ २६ ॥

जो यह पहले कहीहुई चिकित्सा है यह सबवैद्योंकी माता है रक्तपित्तमें क्षयीरोगमें खांसीमें यह चिकित्सा सिद्धिको देनेंवाली है ॥ २५ ॥ जबतक वांसा औषध है तबतक इस रोगवालेकी जीवनेंकी आसा है सो रक्तपित्तरोगवाला और क्षयरोगवाला तथा खांसीवाला पुरुष किसवास्ते दुःख पाता है ॥ २६ ॥

अथ तालीसचूर्ण ॥

तालीसचूर्णं वृषपत्ररसेन युक्तं पेयं समारभ्य पुनः कफपित्तकासे ॥ हन्ति भ्रमं श्वसनकासतासङ्करोत्थं भङ्गस्वरे त्वरितमाशु सुखं ददाति२७

और कफपित्तसे उपजीहुई खांसीमें वांसाके पत्तोंका रसमें तालीसपत्रका चूर्ण मिला पीना चाहिये, भ्रम, श्वांस, खांसी, इन्होंसे उत्पन्नहुआ भ्रम, स्वरभंग, इनरोगोंमें शीघ्रही सुखहोता हैं

अथ अडूसाका क्काथ और कल्क ॥

आटरूषकमृद्वीकापथ्याक्काथः, सशर्करः ॥ क्षौद्राढ्यः श्वसनकासरक्तपित्तनिवारणः ॥ २८ ॥ छागं पयो वा सुरभीपयो वा चतुर्गुणश्चापि जलेन कल्कः ॥ सशर्करं पानमिदं प्रशस्तं सरक्तपित्तं विनिहन्ति चाशु॥२९॥

और वांसा, मुनक्कादाख इन्होंका क्काथमें खांड मिला और शहद मिलादेंनेंसे श्वास, खांसी, रक्तपित्त इन्होंका निवारण होता है ॥ २८॥ और बकरीका दूध अथवा गौका दूध और चौगुना जल इन्होंमें वांसाका कल्कमिला सिद्धकर फिर खांडके संग इसका पीना श्रेष्ठ है यह रक्तपित्तको नाशता है ॥ २९॥

बलाश्वदंष्ट्रामलकीफलानि द्राक्षा मधूकं मधुयष्टिकानाम् ॥ सिद्धं पयः पानमिदं हितं स्यात्पित्ते सरक्ते मनुजस्य शान्त्यै ॥ ३० ॥ खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः ॥ पुष्पं चूर्णं तु मधुना लिह्यादरोगमस्तु ते ॥ ३१ ॥ आटरूषकरसेन सप्तधा भाविता च पुनरेव शोषिता ॥

पिप्पलीमधुसमन्विताभया रक्तपित्तमतिदुर्जयं जयेत् ॥ ३२ ॥ एलाफलानि सपद्मकनागकेशरं द्राक्षा घना मधुकपिप्पलिका समांशा ॥ एषां समांशसितशर्करयुक्तलेहःखर्जूरिका समभिहन्ति च रक्तपित्तम् ॥३३॥ दाहं ज्वरार्त्ति श्वसनं च विमोहतृष्णां मूर्च्छां निहन्ति रुधिरवमिजित्तथैव ॥ ३४ ॥

और खैरहटी, गोखरू, आंवला, दाख, महुआवृक्षकी छाल, मुलहटी, इन्होंको दूधमें मिला पकाके पीनेंसे रक्तपित्तकी शांति होती है ॥ ३० ॥ और खैर, मालकांगनी, शालवन, इन्होंके पुष्पोंका चूर्ण शहदके संग चाटनेंसे इसरोगसे छुटजाता है ॥ ३१ ॥ पीपली और हरडैको सातदिनतक वांसाका रसमें भावनादे फिर सुखाके शहदमें युककर खानेंसे अत्यंत दुर्जय रक्तपित्तका नाश होता है ॥ ३२ ॥ इलायची, पद्माक, नागकेशर, दाख रुद्रजटा, मुलहटी, पीपली, इन्होंको समानभागले और इनसबोंके समान मिसरी मिला फिर लेह बना लेवे इसके खानेंसे शरीरकी खाज, रक्तपित्त ॥ ३३ ॥ दाह, ज्वरकी पीडा, श्वास, मोह, तृषा, मूर्च्छा, वमन इन्होंका नाश होता है ॥ ३४ ॥

अथ नासाप्रवृत्तरुधिरचिकित्सा ॥

घ्राणे प्रवृत्तं रुधिरं यदि स्यात्तदा घृतेनामलकीफलानि ॥
तोयेन स्पृष्ट्वा शिरसि प्रलेपः सरक्तपित्तं सहसा रुणद्धि ॥ ३५ ॥

जो नासिकामें रुधिर प्रवृत्त होजावे तो घृत और जलमें आंवलोंको पीस शिरपे लेप करना चाहिये यह रक्तपित्तको शीघ्रही दूर करता है ॥ ३५ ॥

द्राक्षारसं वा घृतशर्कराढ्यं जलं सिताढ्यं च सरक्तपित्ते ॥
यवान्न चैवेक्षुरसं सिताढ्यं क्षयं च कासं क्षतजं निहन्ति॥३६॥

और दाखोंका रसमें घृत और खांड मिला देनेंसे और मिसरी जलके संग पीनेंसे रक्तपित्त दूर होता है और जवका अन्न मिसरीके संग खानेंसे क्षय क्षतरोगसे उत्पन्नहुई खांसी इन्होंका नाश होता है ॥ ३६ ॥

अथ हरितालिकादिनस्य ॥

नस्यं विदध्याद्धरितालिकाया रसेन बालक्तरसेन वापि ॥
स्याद्दाडिमस्य प्रसवोद्भवेन रसेन नस्यं रुधिरस्रुतेऽपि ॥ ३७ ॥

और कानमें रक्त प्राप्त होजावे तब आलके रसमें अथवा अनारके रसमें हरताल मिला तिसकी नस्य वनाके देनी चाहिये ॥ ३७ ॥

ह परिपीतं दाडिमस्य प्रसूतम् ॥ मलयजसितकुष्ठं पद्मकं चैव वालं म
धु मधुकवालकौ कोद्रवौ द्वौ समन्तात् ॥ ४३ ॥ समसुरभिपयो वा धा
वनं तण्डुलानां परिकलितसमग्रं तुर्य्यभागेन योज्यम् ॥ लघुतरमपि व
ह्नौ धावितं सिद्धमेव भवति वदनवृत्ते लोहिते पानमस्य ॥ ४४ ॥ श्रुति
पथमपि रक्ते वा प्रवृत्ते तु नासं विहितमपि तदा स्यात्पूरणं कर्ण
नासे ॥ रुधिरमभिरुणद्धि श्वासमाशु क्षतं वा श्वसितरुधिरच्छर्दि
मेहमुन्मादरोगम् ॥ ४५ ॥ नासाप्रवृत्ते नस्यं स्यान्मुखे पानं विधे
यकम् ॥ कर्णे नेत्रे पूरणं च गुदमार्गे निरूहणम् ॥ ४६ ॥ दा
डिमफलत्वचं वा चूर्णं लिह्यात्सितायुतम् ॥ पद्मकिञ्जल्कचूर्णं वा लि
ह्याद्वा सितया पुनः ॥ ४७ ॥ मुखप्रवृत्तरुधिरं रुणद्ध्याशु वामिं क्लमम् ॥
श्वासशोषौ भ्रमं तृष्णां नाशयत्याशु निश्चयः ॥ ४८ ॥ जम्ब्वाम्रपल्ल
वानि स्युर्हरीतक्या युतानि तु ॥ मधुशर्करया युक्तमास्यलोहितवारण
म् ॥ ४९ ॥ वटप्रवालार्जुनवृक्षकदम्बजम्ब्वाम्रकाणां खदिरस्य वापि ॥
यथाप्रपन्नो मधुनावलेह आस्यास्रजं वारयते क्षणेन ॥ ५० ॥

जो यदि मनुष्यके मुखमें रुधिर प्रवृत्त होजावे तव उसकी विधिको कहते है मनुष्योंके रुधिरका विकार सुखसाध्य नहीं है और तैसेही जवान स्त्रीकी योनिमेंभी प्रवृत्त हुआ वहता हुआ रुधिर असाध्य कहा है ॥ ४२ ॥ और शहद, मुलहटी, खश, कमलकेशर, दूव, अनारदाना इन्होंका रस पीना श्रेष्ठ कहा है और चंदन, कूठ, पद्माख, नेत्रवाला, शहद, मुलहटी, नेत्रवाला, दोनों प्रकारके कोदू धान्य ॥ ४३ ॥ गौका दूध इन्होंको समान भागले और चतुर्थांश चावलोंका धोवनका पानी लेवे फिर इन औषधोंका कल्क बना तिसमें मिला मंद २ अग्निसे पकावे पीछे मुखमें प्रवृत्तहुए रुधिरमें इसका पीना श्रेष्ठ है ॥ ४४ ॥ और कानमें प्रवृत्तहुआ रुधिरमें अथवा नासिकामें प्रवृत्तहुए रुधिरमें कानमें तथा नासिकामें इसको पूरण करै यह रुधिरको शीघ्रही नाशता है और श्वास, चोट, श्वासमें प्रवृत्तहुआ रुधिर, प्रमेह, उन्माद, इनरोगोंका नाश होता है ॥ ४५ ॥ जो नासिकामें रुधिर प्रवृत्त होजावे तो नस्य देनी चाहिये मुखमें प्रवृत्तहोवे तो पीना चाहिये और कानमें तथा नासिकामें प्रवृत्तहोवे तो पूरण करै गुदामें प्रवृत्तहो तो निरूहवस्ति देनी चाहिये ॥ ४६ ॥ अथवा अनारके फलकी छाल्के. चूर्णको मिसरीमें युक्तकर भक्षण करना चाहिये तथा कमलकेशरके चूर्णको मिसरीकी तरह भक्षणकरै ॥ ४७ ॥ इससे मुखमें प्रवृत्तहुआ रुधिर और वमन, ग्लानि इन्होंका क्षतक्षय, मृगी-

इसका पीना मनुष्योंको तथा स्त्रियोंकोभी हित है और रक्तरोगको नाशता है और पित्तसे माप्तहुआ गुदाका रक्त और लिंग, रोम इन्होंमे माप्तहुआ रक्त, इन्होंका नाश होता है ॥५३॥ यह द्राक्षाआदिनामक घृत रक्तपित्तमें और ज्वरमें हित है और वातरक्त, योनिशूल, भ्रम, मद, शिरोरोग, उन्माद, रक्तप्रमोह, पित्ताम्ल, अतिकुष्ठरोग, क्षयी, क्षतरक्त, राजयक्ष्मा, पांडु-रोग, इन सबरोगोंको नाशता है और अत्रिऋषिसे कहाहुआ यह घृत पानमें तथा वस्ति-कर्ममें मनुष्योंको हित कहा है ॥ ५४ ॥

## अथ कूष्मांडावलेह ॥

छल्लिं निष्कृष्य कूष्माण्डखण्डानि प्रतिकल्पयेत् ॥ काञ्जिकेनाशु धौ तानि पुनरेव जलेन तु ॥ ५५॥ पश्चात्क्षीररसप्रस्थे कल्कयेत्पुनरेव च ॥ घृतेन पुनरेवैतत्पाचयेत्सुविधानतः ॥ ५६ ॥ यदा मधुनिभानि स्युस्तदा शर्करया सह ॥ निधाय तत्र चेमानि भेषजानि प्रकल्पयेत् ॥५७॥ पिप्पलीशृङ्गवेराभ्यां द्वे पले मरिचानि च ॥ जीरके द्वे तथा धात्री त्वगेला पत्रकं तथा ॥ ५८ ॥ पलार्द्धेन वियुञ्जीयाच्चूर्णं तत्र विनिक्षिपेत् ॥ दार्व्या विदधयेत्तावल्लेहीभूतं यदा भवेत् ॥ ५९ ॥ तदा मधुघृतेनापि लिह्याज्ज्ञात्वा बलाबलम् ॥ रक्तपित्तं क्षयं कासं कामलं नैमिकं भ्रमम् ॥ ६० ॥ छर्दितृष्णाज्वरश्वासपाण्डुरोगान् क्षतक्षयम् ॥ अपस्मारं शिरोर्त्तिश्च योनिशूलं च दारुणम् ॥ ६१ ॥ चिरं योनौ रक्तवाहं मन्दज्वरनिपीडनम् ॥ वृद्धोऽपि च युवा कामी वन्ध्या भवति पुत्रिणी ॥ ६२ ॥ अवीर्य्यो वीर्य्यमाप्नोति भवेत्स्त्रीणां प्रियो नरः ॥ एष कूष्माण्डको लेहः सर्वरोगनिवारणः ॥ ६३ ॥

कोहलेको छील तिसको टुकडे बनाके कांजीसे धोवै पीछे जलसे धोवै ॥ ५५ ॥ फिर तिसका कल्क बना ६४ तोले दूध मिला पीछे ६४ तोले घृत मिला अच्छे विधानसे पकालेवे ॥ ५६ ॥ जब वे कोहलाके टुकडे शहदके समान वर्णवाले होजावे तब खांड मिला इन आगे कहीहुई औषधोंको मिलावे ॥ ५७ ॥ पीपल, अदरक, मिरच ये आठ आठ तोले और दोनोंजीरे, दालचीनी, इलायची, तेजपात ॥ ५८ ॥ ये दो २ तोला मिला चूर्ण बनाके गेरै फिर कडछीसे चलावे जब लेह बनजावे ॥ ५९ ॥ तब बलाबलको विचार शहद और घृतके संग इसको खावे यह अवलेह रक्तपित्त, क्षयी, खांसी, कामला, चक्करकी तरह भ्रम इनरोगोंको नाशता है ॥ ६० ॥ और छर्दि, तृषा, ज्वर, श्वास, पांडुरोग, क्षतक्षय, मृगी-

रोग, शिरकी पीडा, दारुण योनिशूल ॥ ६१ ॥ और बहुतसा बहताहुआ योनिका रक्त, मंदज्वरकी पीड़ा, इन्होंका नाश होता है और वृद्धपुरुषभी जवान और कामी होता है वंध्या स्त्री पुत्रवाली होजाती है ॥ ६२ ॥ और जिसके वीर्य नहीं हो वह वीर्यवाला होजाता है और स्त्रियोंको प्रिय होता है यह कूष्मांडकावलेह संपूर्णरोगोंको निवारण करता है ॥ ६३ ॥

## अथ अन्यकूष्माण्डका अवलेह ॥

सुस्निग्धकूष्माण्डकखण्डकानि पलानि पञ्चाशदथो सिताया: ॥ युञ्ज्यात्सतोयं प्रणिधाय धीमान् घृतेन प्रस्थं परिपक्कमेव ॥ ६४ ॥ विज्ञाय पक्कं पुनरेव तत्र वासाकषायश्च विमिश्रयेच्च॥ पश्चात्पचेद्यावत्तु दर्वीलेपो ज्ञात्वा तु चेमानि पुनर्वियुञ्ज्यात् ॥ ६५ ॥ धात्री घना च भार्ङ्गी च सुगन्धत्रयं च युञ्ज्यात्समस्तानि तानि कर्षमात्राम् ॥ तस्मात्पुनर्नवा च नागरधान्यकानि एषां पलस्य तुलिता कथितानुमात्रा॥६६॥ श्यामापलाष्टकमिदं विदधीत चूर्णं संघट्टयेत्सकलमेव पुनस्तु दर्व्या॥ युञ्ज्यात्समं मधुयुतं सकलामयघ्नं कासं ज्वरं क्षतजमाशु निहन्ति हिक्काम् ॥ ६७ ॥ हृद्रोगपित्तरुधिरं क्षयपीनसं च पित्ताम्लकं विजयते श्वसनं च मूर्च्छाम् ॥ स्त्रीणां हितं भवति बालकवृद्धकेषु श्रेष्ठं समस्तरुजनाशबलप्रदं च ॥ ६८ ॥

अच्छे सुंदर कोहलाके चिकने २ टुकडे बना फिर तिसमें २०० तोले मिसरी मिलावे पीछे तिसमें जल मिला और ६४ तोले घृत मिला तिसको पकावे ॥६४॥ जब पकजावे तब उतारि तिसमें वासाका क्वाथ मिलाके फिर पकावे जब कडछीके चपकने लगजावे तब इनऔषधोंको गेरै ॥ ६५ ॥ आंवला, रुद्रजटा, भारंगी, सुगंधत्रय, दालचीनी, तेजपात, इलायची, इन्हों- को एक २ तोलाप्रमाण लेवे सोंठी, सूंठ, धनियां, इन्होंको चार २ तोले गेरै और निशोतका चूर्ण ३२ तोले मिलावे पीछे इनसबोंको मिला ॥ ६६ ॥ कडछीसे घोटै फिर इसको बरा- बरके शहदमें मिलाके खावे यह अवलेह, खांसी, ज्वर, क्षतरोग, हिचकी ॥ ६७ ॥ हृदयरोग, पित्तरक्त, क्षयी, पीनस, पित्ताम्ल श्वास, मूर्च्छा, इनरोगोंको नाशता है और स्त्री बालक वृद्ध, इन्होंको श्रेष्ठ है बलको देनेवाला है ॥ ६८ ॥

## अथ खंडकाद्यरसायन ॥

शतावरी मुण्डितिकामृता च फलात्वक् च पुष्करमूलभार्ङ्गी ॥ वृषो वृ

हृत्या खदिरं च मांशली पृथक् पृथक् पञ्चपलैकमात्रया॥६९॥ उत्तार्य पक्कं जलमाशु पश्चाद्यावद्भवेच्छेषमथैव पूतम्॥ विमूर्च्छितं तत्र निधाय धीमान्पलं तथा द्वादशमाक्षिकस्य ॥ ७० ॥ तथाशु चूर्णस्य च लोहकस्य विघट्टितं खण्डघृतेन तुल्यम् ॥ देयं पलं षोडशकं विधिज्ञो विपाचयेल्लोहमये च पात्रे ॥ ७१ ॥ गुडेन तुल्योऽपि विभाति याव त्तुगा विडङ्गं मगधा च शुण्ठी ॥ द्वे जीरके कण्टकं त्रिफलानां भृङ्गं धान्यमरिचं सकेसरम् ॥ ७२ ॥ पलेन मात्रां विदधीत पृथक् सुघट्टितं चूर्णमिदं घृतस्य ॥ स्निग्धे कटाहे प्रणिधाय युञ्ज्यात्कर्षप्रमाणं विदधीत चूर्णम् ॥ ७३ ॥ प्रभातकाले सरोवारिपानं गुरूणि चाम्लानि च वातलानि ॥ भगन्दरादिश्वयथून्निहन्ति रक्ताम्लकं वा श्वसनञ्च यक्ष्मिणम् ॥ ७४ ॥ विशोषणं कुष्ठरुजां च गुल्मान्वलप्रदं वृष्यतमं प्रदिष्टम् ॥ स रक्तपित्तं सहसा निहन्ति योनिप्रभावं च सरक्तशूलम् ॥ ७५ ॥ रक्तातिसारं रुधिरप्रमेहं समेढ्रवस्तौ निहितं नराणाम्॥ सौभाग्यदं कान्तिकरं प्रदिष्टं तेजौजःपुष्टिं वलमातनोति ॥ ७६॥

शतावरी, गोरखमुंडी, गिलोय, त्रिफला, दालचीनी, पौहकरमूल, भारंगी, वांसा, कटेहली, खैर, मूसली, इन्होंको जुदे २ वीस वीस तोला प्रमाण लेवे ॥ ६९ ॥ फिर इन्होंको जलमें पकावे जब चतुर्थांश क्वाथ बाकी रहे तब उतारि तिसको वस्त्रमांहके छानी पीछे इनआगे कहीहुई औषधोंको गेरै ४८ तोले प्रमाण शहद मिलावे ॥ ७० ॥ और ४८ तोला प्रमाण लोहाका चूर्ण गेरै और खांड तथा घृत इन्होंको समानभाग ६४ तोले प्रमाण गेरै फिर लोहेके पात्रमें पकावे ॥ ७१ ॥ पीछे पकके गुडके समान होजावें तब वंशलोचन, वायविडंग, पीपली, सूंठि, दोनोंजीरे, गोखरू, त्रिफला, भंगरा, धनियां, मिरच, केशर ॥ ७२ ॥ इनसबोंको चार २ तोला प्रमाण लेवे पीछे इनसबोंका चूर्ण मिला अच्छीतरह घोटि घृतके चीकने कडाहेमें घाल धरे पीछे इसको एक तोला प्रमाण हमेशै खावै ॥ ७३ ॥ और प्रातःकाल सरोवरके जलका अनुपान करै और भारे तथा खट्टे और वातवाले पदार्थ खानें चाहिये और भगंदर, शोजा, रक्ताम्ल, श्वास, राजयक्ष्मा ॥ ७४ ॥ विशोष, कुष्ठरोग, गुल्म, इनरोगोंका नाश करता है और बलको देनेंवाला है और वीर्यमें हित है और रक्तपित्तरोगको शीघ्रही नाशता है और योनिमें वहताहुआ रक्त, योनिका शूल, ॥ ७५ ॥ रक्तातिसार, रुधिर प्रमेह, लिंगका रोग, और वस्तिस्थानका रोग इन्होंको नाशता है और कांतिको करनेंवाला है और तेज, पुष्टि, बल, इन्होंको बढाता है ॥ ७६ ॥

अथ रक्तातिसारचिकित्सा ॥

रक्तातिसारे च प्रयोजनीयं रक्तप्रवाहे सरुजे सदाहे ॥ फलत्रिकश्च स विषा समङ्गा सपर्पटं दाडिमधातकीनाम् ॥ ७७ ॥ चूर्णं मधुशर्करया स मेतं तथैव दध्ना सघृतं सलेहम् ॥ रक्तातिसारं रुधिरप्रवाहं योनिप्रवाहं स ततं स्त्रियश्च ॥ ७८ ॥ निवारयत्याशु हितं नराणां बालेऽतिसारे प्रशमाय योग्यम् ॥ ७९ ॥

और रक्तातिसार तथा पीडासहित और दाहसहित रक्तप्रवाह, इन रोगोंमें त्रिफला, अतीश, मंजीठ, पित्तपापडा, अनारदाना, धवके फूल,॥७७॥ इन्होंका चूर्ण बना तिसमें खांड और शहद मिला और दही, घृत ये मिला फिर अवलेह बनाके देना चाहिये यह अवलेह रक्तातिसार रुधिरप्रवाह, स्त्रीके निरंतर योनिका प्रवाह ॥ ७८ ॥ इन्होंका निवारण करता है और मनुष्योंको हित है बालकके अतिसारको शांत करता है ॥ ७९ ॥

अथ योनिप्रवाहचिकित्सा ॥

योनिप्रवाहे मधुकं समङ्गा एलादलं निम्बदलानि पथ्या ॥ मुस्ता विशाला कटुरोहिणी च कल्को हितः शर्करया युतोऽयम् ॥ ८० ॥ योनिप्रवाहं विनिवारयेच्च सयोनिशूलं सरुजां तृषार्त्तिम् ॥ एला समङ्गा सहशाल्मलीनां हरीतकी मागधिका समांशा ॥ ८१ ॥ क्वाथोदितः शर्करया समाध्व्या योनिप्रवाहं विनिवारयेच्च ॥ ८२ ॥

योनिके प्रवाहमें मुलहटी, मंजीठ, इलायचीके पत्ते नींबके पत्ते हरडै नागरमोथा, इंद्रायण कुटकी, इन औषधोंका कल्क बना तिसमें खांड मिला खाना चाहिये ॥ ८० ॥ यह विशेष करिकै योनिके प्रवाहको दूर करता है और पीडासहित योनिशूल तृषाकी पीडा इन्होंको दूर करता है और इलायची, मंजीठ, शालवन, हरडै, पीपली, इन्होंको समान भागले ॥ ८१ ॥ क्वाथ बना तिसमें खांड और शहद मिला पीनेसे रक्तप्रवाह दूर होता है ॥ ८२ ॥

घर्मातपान्ते च विदाहि चाम्लं सौवीरकं वा कटुकं कषायम् ॥ क्षारं सुरा वा परिवर्जनीयं सरक्तपित्ते मनुजे हिताय ॥ ८३ ॥ वास्तूकचिल्ली सुनिषणकश्च जीवन्तिका वा शतपुष्पिका वा ॥ शाका हिता र लोहिततण्डलाश्च ॥ ८४ ॥ यवगोधमच

॥ ८५ ॥ हरिणशशकलावास्तित्तिरास्ते कुलिङ्गाः ककेरा अपि मयूराः क्रौञ्चपारावतानाम् ॥ पललमनिलपित्तवर्हणं वै हितञ्चेद्भवति बलम मोघं सत्त्वतेजश्च कान्तिः ॥ ८६ ॥ इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने रक्तपित्तचिकित्सा नाम दशमोऽध्यायः ॥ १० ॥

और रक्तपित्तरोगमें मनुष्यके हितकेवास्ते घाम, अग्निकी गरमाई, विदाही, खट्टा पदार्थ कांजी चर्चरा कसैला पदार्थ खारा और मदिरा इन्होंको वर्ज देवै ॥ ८३ ॥ और वथुआ, चिल्ली वथुवाका भेद, कुरडू, जीवंतिकाशाक, सौंफ, इन्होंके शाक ये सब रक्तपित्त-में हित कहे है और मूंग लाल चावल ये हित कहे है ॥ ८४ ॥ और जव, गेहूं, चणे, तूरीधान्य, परवल, मूंग, उडद, ये अन्न रक्तपित्तको निवारण करनेमें हित कहे है ॥ ८५ ॥ और हिरन, शूशा, लावा, तीतर, चिमणापक्षी, ककेरा, मयूर, कूंजि, परेवापक्षी, इन्होंका मांस खानेसे और वातपित्तके नाशक मांसके खानेसे अमोघ बल होता है और सत्वगुण, तेज, कांति, इन्होंको वढाता है ॥ ८६ ॥ इति, वेरीनिवासिवुधशिवसहायसूनुवैद्यरविंदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां तृतीयस्थाने रक्तपित्तचिकित्सानाम दशमोऽध्यायः ॥ १० ॥

---

## अथ एकादशोऽध्यायः ॥ ११ ॥

### अथ अर्शचिकित्सा ॥

आत्रेय उवाच ॥ अथातो वक्ष्यते पुत्र ! अर्शस्य च चिकित्सितम् ॥ षट्प्रकारेण ये प्रोक्तास्तेषां च शृणु लक्षणम् ॥ १ ॥

आत्रेयजी कहते हैं–हे पुत्र ! अव अर्श अर्थात् ववासीर रोगकी चिकित्साको कहते है जो छह प्रकारके ववासीररोग कहते है तिन्होंके लक्षणको सुन ॥ १ ॥

### अथ अर्शके प्रकार ॥

जाता दोषैस्त्रिभिरपि वातपित्तकफादिकैः ॥ सन्निपाते चतुर्थः स्यात्पञ्चमो रक्तसम्भवः ॥ २ ॥ षष्ठकः सहजो ज्ञेयश्चार्शसां षड्विधो भवः ॥ एवं च षट्प्रकारेण जायन्ते गुदजा रुजः ॥ ३ ॥

वात आदिक तीनदोषोंसे होता है वातसे १ पित्तसे २ कफसे ३ और सन्निपातसे उपजा चौथा होता है और पांचवा रक्तसे उपजाहुआ ववासीर रोग होता है॥ २ ॥ और छठा सह-ज अर्थात् स्वभावसेही उपजाहुआ होता है इसप्रकारसे गुदाके रोग छहतरहसे होते है ॥ ३ ॥

अथ वातार्शके हेतु और संप्राप्ति ॥

अनशनलघुरूक्षाहारसंसेवनेन कटुलवणविदाहिसेवया वातरोधात् ॥ भवति सततवीप्सा विष्टरेणैव हीना कुपितमरुतवेगादर्शसां भूतिरासीत् ॥ ४ ॥ अनशनोपविष्टस्य मलमूत्रावधारणे ॥ शीतसंसेवनेनापि गुदजः संप्रकुप्यति ॥ ५ ॥ लवणकटुकषायातिक्तसंसेवनेन अमितलघुतरभो ज्याच्छीतलेनातिरोधात् ॥ कुपितमलिननामापानमार्गेष्वपाने वितरति रुधिरवातापानमार्गे मरुत्सु ॥ ६ ॥

अनशन अर्थात् भोजन नहीं करनेसे हलका और रूषाभोजन करनेसे और चर्चरा, नमक, विदाही, ऐसे पदार्थके खानेसे और वातके रोकनेसे और आसनपे निरंतर नहीं बैठनेसे वायु कुपित होजाता है तिस्से ववासीर रोग होजाता है ॥ ४ ॥ जो भोजनकिये विना बैठारहे और मलमूत्रके वेगको रोके और शीतल वस्तुका सेवन करै उसके गुदाका वायु कुपित होजाता है ॥ ५ ॥ और नमक, चर्चरा, कसैला, कडुआ, इनवस्तुओंके सेवनेंसे अत्यंत ज्यादै हलका भोजनसे वायुकुपित होके मलिननामवाला अपानवायुको गुदामें रहनेंवाला-को विगाड देता है फिर वह अपानवायु गुदामें रक्तका रोग होजाता है ॥ ६ ॥

अथ पित्तार्शका हेतु ॥

कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च ॥ सेवनानिलतोयेन श्रमा द्व्यायामपीडया ॥ यानव्यवायदोषाद्वा दुर्नामा पित्तसम्भवः ॥ ७ ॥

और चर्चरा, खट्टा, नमक, गरम, विदाही, भारा, ऐसे पदार्थके सेवनेंसे वायु, जल, इन्होंके सेवनेंसे श्रमसे, कसरतकी पीडासे, असवारी और मैथुनके दोषसे पित्तसे उपजा ववासीर होता है ॥ ७ ॥

अथ कफार्शका हेतु ॥

अव्यायामान्तस्य शीलादजस्रं शीताद्वान्याद्वातसंसेवनाच्च ॥
लौल्यात्यम्लात्तैलसंपिच्छलेन दुर्नामा संजायते श्लेष्मरोगात् ॥ ८ ॥

और कसरत नहीं करनेंसे अथवा निरंतर कसरत करनेंसे शीतल वस्तुके सेवनेंसे और वायुके सेवनसे और जिसकी गुद्दी बंधतीहो ऐसे पदार्थसे तथा अत्यंत खट्टा पदार्थके सेवनें-से कफसे उपजाहुआ ववासीर होजाता है ॥ ८ ॥

अथ वातार्शका लक्षण ॥

शोफावुभौ कृष्णनखस्य नेत्रे लिङ्गानि वातप्रभवार्शसानाम् ॥ ९ ॥

और शीतलता रहै चभकाहो कठोरताहो निद्राही आवे और गुल्मोदर, अष्ठीला, विषूचिका, शोजा, ये उपद्रवहो और नख मुख नेत्र ये काले रहै ये वायुसे उपजेहुए ववासीररोगके लक्षण हैं ॥ ९ ॥

अथ पित्तार्शका लक्षण ॥

दाहभ्रमौ ज्वरपिपासिशरीरतो वा मूर्च्छारुचिर्नयनदन्तमुखानि यस्य ॥
पीतच्छविर्भवति वा विटभेदनं च पित्तेन जातगुदजस्य च लक्षणानि ॥१०॥

दाहहो भ्रमहो ज्वरहो तृषाहो, शरीरमें मूर्च्छाहो अरुचिहो और नेत्र दांत, मुख, ये जिसके पीले होजावे विष्ठा ढीला हो ... पित्तसे उपजा ववासीरके लक्षण है ॥ १०॥

अथ कफार्शका लक्षण ॥

निद्रा च जाड्यघनमन्दरुजा च शोफा शूलातिगुल्मगुदभङ्गुरकास्तथा स्युः ॥ विड्बन्धतोदमरुचिर्गतिमन्दता च श्लेष्मोद्भवा गुदरुजः खलु भेषजज्ञ ! ॥ ११ ॥

निद्राहो, जडताहो, भारापनहो, मंद पीडाहो, शोजाहो, शूल, अत्यंत गुल्म, गुदाका भंग, विड्बंध, चभका, अरुचि, मंदगति, ये लक्षणहो वह कफसे उपजा ववासीर जानना ॥ ११ ॥

अथ त्रिदोषार्शका लक्षण ॥

शूलानाहारुचिः कासो हृल्लासो रुचिनोदता ॥
स्कन्धयोर्जाड्यता सर्वाश्चार्शसि संभवन्ति हि ॥ १२ ॥

शूलहो, अफाराहो, अरुचिहो, खांसीहो, थुकथुकीहो, अरुचिकी पीडाहो, कंधोंमें जडताहो, ये सब दोषोंसे उपजे ववासीरके लक्षण है ॥ १२ ॥

अथ गुदरोगलक्षण ॥

गुदजलक्षणं वक्ष्ये गुदे कण्डूस्त्वक्स्रवः ॥ परुषा विषमा दीर्घा वातेन गुदजा मताः ॥ १३ ॥ सदाहाश्च विचित्राश्च पीता नीलावभासिकाः ॥ लोहितं स्रवते सोष्णं पित्तेन गुदजा मताः ॥ १४ ॥ सदाहाः कठिना ये तु तत्र पाको विड्बन्धता ॥ शीतकण्डूसमस्थूलाः कफेन गुदजा मताः ॥ १५ ॥ सदाहाः सरुजः श्यावाः कण्डूः शोषश्च जायते ॥ स्रवते

सततं रक्तं ते कण्डूासृग्भवार्शसाः ॥ १६ ॥ धान्याङ्कुरसमाकाराः क्रिमयः संभवन्ति च ॥ वातवर्चःसमा लिङ्गा गुदजाः संभवन्ति हि ॥ १७ ॥ वक्रास्तीक्ष्णाः स्फुटितवदना दीर्घविम्वीफलाभाः केचित्सिद्धार्थककण निभाः कालखर्जूरकाभाः॥ कर्कन्ध्वाभाः कलम्बकसमाः केचिदम्भोज वीजा वायोश्चासौ मनुज! विहितःसम्भवश्चार्शसां च ॥ १८ ॥

अव गुदाके रोगका लक्षणको कहते है गुदामें खाजिहो, रक्त प्रवृत्तहो, कठोरहो, विषमहो, दीर्घहो ये वातसे उपजे गुदाके ववासीरोंके लक्षण है ॥ १३ ॥ दाहवालीहों, विचित्रहों, नीलावर्णवालीहों, गरम रुधिर गिरताहो ये पित्तसे उपजे ववासीरके गुमडियोंके लक्षण है॥१४॥ और दाहवालीहों कठिणहों पकी हुईहो विष्ठावंधहो, और, और खाजिहो, समानहो, और स्थूलहो ये कफसे उपजी ववासीरकी गुमडियोंके लक्षण है ॥ १५ ॥ और जो दाहसहितहो, पीडासहितहों, कपिशवर्णवालीहो, खाजिहो, शोपहो और निरंतर रक्त झिरै ये खाजिसहित रक्तसे उपजे ववासीरके लक्षण है ॥ १६ ॥ और धान्यके अंकुरके समान चिन्हवाला क्रिमि होजाते है और वायुके विष्ठाके समान लिंगवाले होते है ॥ १७ ॥ और टेढे, खुलेहुए मुखवाले, तीक्ष्ण, वडे, गुलरके फलके समान तेजवाले, कईक सिरसमके समान आकारवाले और कईक काली खजूरीके समान आकारवाले और कईक वेरके समान आकारवाले अथवा सिरसमके फलके समान आकारवाले तथा कमलगट्टाके समान आकारवाले ऐसे मस्से वायुसे उत्पन्न हुए ववासीरके होते है ॥ १८ ॥

## अथ अर्शके स्थान ॥

गुदे नासाकर्णरन्ध्रे मुखे वा तथावर्त्तनेत्रान्तरयोनिमध्ये ॥ नराणां सकाशे भवन्ति रोगा न साध्याः सुखेन क्रिया यत्नतः स्यात् ॥ १९ ॥

और गुदा, नासिका, कान, मुख, नेत्रोंके कोणमें योनिका मध्य, इन्होंमें मनुष्योंके अर्श रोग होते है सो साध्य नहीं है तहां यत्नसे क्रिया करनी चाहिये ॥ १९ ॥

## अथ गुदामें अर्शका स्थान ॥

त्रिवलीगुदमध्ये तु वाह्यतोऽभ्यन्तरेषु च ॥ अर्शसां तु विजानीयात्त्रीणि स्थानानि चैव हि ॥ २० ॥ वाह्यतः सुखसाध्यः स्यान्मध्ये कष्टेन ध्योऽन्तर्वलीजातो गदजो भिषजां वर! ॥ २१ ॥

बाहिरके स्थानकी बवासीर सुखसाध्य है और जो मध्यमें हो वह कष्टसाध्य होता है और जो गुदाके अंतर्वलीहो वह असाध्य रोग कहा है ॥ २१ ॥

## अथ अर्शकी चिकित्साका प्रकार॥

प्रलेपवर्त्तिभिः स्वेदैर्बाह्याः सिध्यन्ति चोत्तमाः ॥ यन्त्रशस्त्रेण मध्यास्तु अन्तर्जाश्चान्तरौषधैः ॥२२॥ तस्मात्पुत्र ! प्रयत्नेन क्रिया कार्या विजानता ॥ येनातुरस्य रक्षा स्याद्येन रोगो निवर्त्तते ॥ २३ ॥

और प्रलेप, बत्ती लगाना, स्वेद, इन्होंसे बाहिरकी पिंडिका सिद्ध होती है और गुदाके मध्यके मस्सोंको यंत्र शस्त्रसे सिद्ध करै और अंतर भीतरकी बवासीरको औषधोंसे सिद्ध करै ॥ २२ ॥ हे पुत्र! इसवास्ते जानते हुए वैद्यनें ऐसी क्रिया करनी चाहिये कि जिस्से रोगीकी रक्षा होजावे और रोग निवृत्त होवे ॥ २३ ॥

## अथ अर्शरोगके उपद्रव॥

करचरणमुखे वा नाभिमेढ्रे गुदे वा भवति हि यदि पुंसां शोफशोषो ज्वरश्च ॥ श्वसनतमकच्छर्दिर्मोहहृत्पार्श्वशूलं कृशमरुचिविबन्धश्चातिसारोपसर्गाः ॥ २४ ॥ इत्येवं द्वादशार्शसां संभवन्ति ह्युपद्रवाः ॥ उपद्रवैर्विना साध्या न साध्या बहूपद्रवाः ॥ २५ ॥

जो यदि मनुष्योंके हाथ पैर, मुख, नाभि, लिंग, गुदा इन्होंमें शोजा और शोषहो तथा ज्वरहो श्वासहो अंधेरी आवै छर्दिहो मोहहो हृदामें पशलीमें शूलहो. माडाहोना, अरुचि, मलका बंधा अतिसार ये होवे तो ॥ २४ ॥ ये बारह प्रकारके बवासीरके उपद्रव जानने उपद्रवोंके विना तो बवासीर रोग साध्य है और उपद्रवों सहित बवासीर असाध्य है ॥ २५॥

## अथ असाध्यअर्श॥

शूलारोचकतृष्णार्त्तश्चातिरक्तप्रवाहवान् ॥
शूलशोफातिसारार्त्तो ध्रुवं न जीवतेऽर्शसः ॥ २६ ॥

शूल, अरुचि, तृषा, इन्होंकी पीडावाला और रक्तके प्रवाहवाला, शोजा अतिसार इन्होंको पीडासे युक्त ऐसा अर्श रोगवाला पुरुष नहीं जीवता है ॥ २६ ॥

## अथ पाचनकाथ॥

अतोर्शसां प्रवक्ष्यामि क्रियां चैव भिषग्वर ! वटकाक्षारशस्त्राणि येन संपद्यते सुखम् ॥ २७ ॥ अर्शसां च क्रियाः प्रोक्ताश्चार्शघ्ना बलवर्द्धनाः ॥

पित्तशोणितशमना न च वातप्रकोपनाः ॥२८॥ तस्यादौ पचनं श्रेष्ठं ततो भेषजमाहरेत् ॥ पथ्यामृता च धनिका पाने क्वाथो गुडान्वितः॥ २९ ॥

हे उत्तम वैद्य! अब ववासीररोगोंकी क्रियाको कहते है गोली, क्षार, शस्त्रक्रिया इन इलाजोंसे सुख होता है ॥ २७ ॥ अर्शरोगोंको नाशनेंवाली और बलको बढानेंवाली अर्श रोगकी क्रिया कही है जो क्रिया रक्तपित्तको शांत करनेंवाली और वातको कोप नहीं करनेंवालीहों सो करनी चाहिये ॥ २८ ॥ ववासीरकी आदिमें पाचन औषध करै पीछे अन्य औषध करै और हरडै, गिलोय, धनियां इन्होंका क्वाथ बना तिसमें गुड मिला पीना चाहिये यह पाचन औषध कहा है ॥ २९ ॥

अथ कल्कयोग ॥

दन्ती विडङ्गमगधा धान्या भल्लातकगुडं तिलकुष्ठयुक्तम् ॥
संसिच्य पयसातिकल्को निहन्तिपाने गुदजांश्च रोगान् ॥ ३० ॥

जमालगोटाकी जड, वायविडंग, पीपली, धनियां, भिलावा, गुड, तिल, कूठ, इन्होंका कल्कबना दूधसे युक्तकर तिलका भक्षण करनेंसे गुदाके रोगोंका नाशहोता है ॥ ३० ॥

नागरपिप्पलीविल्वविडङ्गं दन्ती च शठ्यभया त्रिवृता च ॥ कल्कमिदं सगुडं प्रतिपाने वार्शांसि नाशनकारि नराणाम् ॥ ३१ ॥

और संठ, पीपली, वेलगिरी, वायविडंग, जमालगोटाकी जड, कचूर, हरडै, निशोत, इन्होंका कल्क बना गुडमिला खानेंसे मनुष्योंके ववासीररोगोंका नाश होता है ॥ ३१॥

अथ पत्रकादिक्काथ ॥

पत्रककेसरशुण्ठीसमैलातुम्बुरुधान्यविडङ्गतिलानाम् ॥ क्वाथो हरीतकीसर्पिर्गुडेन पीतो निहन्ति गुदे गदजानि ॥ ३२ ॥

और तेजपात, केशर, संठ, इलायची, धनियां, वायविडंग, तिल, हरडै इन्होंको समानले और धनियांको दो भागले फिर क्वाथ बना गुड मिलाके पीनेंसे गुदाके रोगोंका नाशहोता है॥

अथ पिप्पल्यादियोग ॥

पिप्पलिकामभयां गुडयुक्तां प्रातर्भवे नरो भक्षति चैताम् ॥
तस्य गुदकीलकमाशु हन्ति सकामलपाण्डुजरोगवर्गान् ॥ ३३ ॥

और पीपल, हरडै इन्होंको गुडमें मिला प्रातःकाल जो मनुष्य भक्षण करता है उसका गुदकीलकरोग शीघ्रही नष्ट होताहै और कामला, पांडु इनरोगोंके समूहोंका नाशहोता है॥३३॥

अथ वार्ताकयोग ॥

सुस्विन्नवार्त्ताकफलस्य तोयं दध्ना सिताढ्या सलिलान्ततेन ॥ पाने विधे यं गुदकीलकानां क्रिमीन्निहन्याक्रिमिजांश्च रोगान् ॥ ३४ ॥

और वथुआका शाक, बैंगन, इन्होंका जलमें दही और मिसरी मिलाके और अन्य जल नहीं मिलावे पीछे इसके पीनेंसे गुदकीलकरोगका नाश होता है ॥ ३४ ॥

अथ भल्लातकचतुष्टय ॥

भल्लातकाः कृष्णतिलाश्च पथ्या चूर्णं गुडेनापि नरस्य सेव्यम् ॥ हन्याच्च पाने गुदकीलमेहशूलार्शकासान् विनिहन्ति तस्य ॥ ३५ ॥

भिलावे, कालेतिल, हरडै, इन्होंका चूर्णको गुडके संग खानेंसे गुदकीलक रोग दूर होता है और प्रमेह, शूल, ववासीर, खांसी इन्होंका नाश होता है ॥ ३५ ॥

सूरणकन्दकमर्कदलैस्तु वेष्टितमेव हि कर्दमलिप्तम् ॥ तप्तमनलवर्णकसमानं तत्पयः सैन्धवतैलविमिश्रम् ॥ ३६ ॥ भक्षति चार्शविनाशहेतोर्वातविकारहितोऽपि नरस्य ॥ ३७ ॥

और जमीकंदको आकके पत्तोंसे लपेट तिसपै गारां लीप फिर अग्निमें स्थापित करदेवै जब तपके अग्निके समान होजावे तब तेल और सेंधानमक मिला और दूध मिला ॥ ३६ ॥ भक्षण करनेंसे ववासीर दूर होती है और वायुके विकारभी दूर होजाते है ॥ ३७ ॥

अथ कल्याणनामकलवण ॥

चित्रकपुष्करमूलशठीनां तेषु समांशास्तिला विनियोज्याः ॥ सूरणकन्दकखण्डसमेतं तेषु समोऽग्निकफलानि दध्यात् ॥ ३८ ॥ सैन्धवं तस्य चतुर्गुणकश्च भावितमर्कदलेन समस्तम् ॥ तच्च घृतस्य घटे विनिधाय अरण्यगोमयवह्निविपक्वम् ॥ ३९ ॥ क्षीरमिदं लवणघृतपक्वं तक्रयुतं प्रतिपानमतोऽपि ॥ नाशयति गुदकीलककीलान्हन्ति विषूचिभगन्दरानपि ॥ ४० ॥ कामलपाण्डुानाहविबन्धान्गुल्ममरोचकनाशनकारी ॥ मूत्रगदगलकण्डुक्रिमीणां नाशनभद्रकसैन्धवो नाम ॥ ४१ ॥

और चीता, पोहकरमूल, कचूर, इन्होंके समान तिल और जमीकंदके टुकडे और इन्होंके समान मालकांगनी॥३८॥ और इनसवोंसे चारभाग सेंधानमक इनसवोंको आकके पत्तोंका रसमें भावनादे पीछे इसको घृतके चीकनें घडेमें घालके आरनोंकी अग्निमें पकावे ॥३९॥

पीछे इसको दूधमें पकावे फिर नमक, घृत इन्होंमें पका तक्रके संग पीनेसे गुदकीलकरोगोंका नाश होता है और विषूचिका, भगंदर ॥ ४० ॥ कामला, पांडुरोग, आनाह, मलका बंधा, गुल्म, अरुचि इन्होंका नाश होता है और मूत्ररोग, गलरोग, क्रिमिरोग, इन्होंको यह कल्याणलवण सैंधव औषध नाशता है ॥ ४१ ॥

## अथ भल्लातकवटक ॥

त्रिकटुकमगधानां मूलचित्रं त्रिगन्धं समतुलितममीषां तुल्यभल्लातकानि ॥ सकलमिह समन्तादेकतः संप्रचूर्ण्य द्विगुणतुलितमात्रं योजनीयो गुडस्तु ॥ ४२ ॥ सकलमपि विकुट्य स्निग्धभाण्डे निधाय प्रतिदिनमपि सेव्यं चाक्षमात्रं सुधीरैः॥ गुदजजठररोगं शूलगुल्मान्क्रिमींस्तु जनयति वडवाग्निं हन्ति पाण्डुं क्षयं वा ॥ ४३ ॥

त्रिकटु अर्थात् सूंठ, मिरच, पीपल, सहौंजना, चीता, त्रिगंध अर्थात् दालचीनी तेजपात इलायची इन्होंको समान भाग लेवे और इनसबोंके समान भिलाये लेवे पीछे इनसबोंका एक जगह चूर्ण बना इन्होंसे दूनी मात्रा गुड गेरै ॥ ४२ ॥ पीछे इन सबोंको कूटि चिकनें बरतनमें घाल धरै फिर धीर पुरुषोंको दिन २ प्रति एक २ तोला प्रमाण खाना चाहिये यह गुदाके रोग, उदररोग, शूल, गुल्मरोग, क्रिमि, पांडु, क्षयरोग, इन्होंको नाशता है और जठराग्निको दीप्त करता है ॥ ४३ ॥

## अथ प्राण देनेंवाला मोदक ॥

नागरं त्रिफलां चैव पलांस्त्रींश्च प्रयोजयेत् ॥ चतुष्पलानि मरिचानां पिप्पलीनां पलद्वयम् ॥ ४४ ॥ पलमेकं त चव्यस्य योज्यं तत्र भिषग्वरैः ॥ तालीसार्द्धं पलं देयं पलार्द्धं पद्मकस्य च ॥ ४५ ॥ जीरकस्य समं मात्रा समेन तुलितो गुडः ॥ सुपक्का सुघना श्यामा पिप्पलीनां शतत्रयम् ॥ ४६ ॥ उलूखले क्षोदयित्वा स्निग्धभाण्डेन धारयेत् ॥ ४७ ॥ अक्षप्रमाणा गुटिका नराणां प्रातः प्रदेया सकलामयघ्नी ॥ निहन्ति चार्शांसि च पाण्डुरोगं हलीमकं कामलकं भ्रमं वा ॥ ४८ ॥ गुल्मातिसारं च सरक्तपित्तं क्षयं क्षतं चाक्षयमस्य यक्ष्मा ॥ जीर्णज्वरारोचकपीनसानां हितो भवेत्प्राणदमोदकोऽयम् ॥ ४९ ॥

सूंठ, त्रिफला, इन्होंको बारह २ तोले प्रमाण लेवे मिरच १६ तोले लेवे, पीपल ८ तोले ॥ ४४ ॥ चव्य ४ तोले ऐसे वैद्यजन लेवे और तालीसपत्र दो तोले पद्माक २ तोले ॥ ४५ ॥ इन सबोंके समान जीरा और जीराके समान गुड लेवे और सुंदर पकीहुई सुंदर करडी और श्यामवर्णवाली ऐसी ३०० सौ पीपल ॥ ४६ ॥ इन सबोंको ऊखलमें कूट फिर चिकनें बरतनमें घाल धरै ॥ ४७ ॥ यह एक तोला प्रमाणकी गोली मनुष्योंको प्रातःकाल देनी चाहिये सब रोगोंको नाशनेवाली है और ववासीर, पांडुरोग, हलीमक, कामला, भ्रम, इनरोगोंका नाश होता है ॥ ४८ ॥ और गुल्म, अतिसार, रक्तपित्त, दारुण राजयक्ष्मा, जीर्णज्वर, अरुचि, पीनस, इनरोगोंमें यह प्राणद मोदक हित है ॥ ४९ ॥

## अथ कांकायनगुटिका ॥

जाजीपिप्पलिमूलकोलमगधापथ्याग्निकं नागराः सूक्ष्मैला च पलद्वयेऽपि क्रमशः कृत्वा पलैः सैन्धवम् ॥ भल्लातक्यफलानि पञ्चशतकं तेन समस्तेन तु द्वैगुण्येपि पुराणसूरणस्ततः सर्वस्य तुल्यो गुडः ॥ ५० ॥ क्षोदित्वा वटकाक्षमात्रमुपरि जातो विशेषो गुणः कुर्वत्यर्शनिवारणं क्षयमपि पुष्टं तथा सुप्रजम् ॥ मन्दाग्निर्वडवासमो भ्रमहरो हृद्रोगपाण्डामयं शूलानाहभगन्दरो भयहरो दुष्टार्त्तिनिर्वासनः ॥५१॥ कृतोऽप्यर्थे विकारोऽपि ऋषिणा योगयुक्तिना ॥ काङ्कायनेन मतिमान् तेन सौख्यमभीप्सति ५२

जीरा, पीपलामूल, वेर, पीपल, हरडे, चीता, सूंठ, छोटी इलायची इन्होंको आठ २ तोला प्रमाण लेवे और इन्होंके समान सेंधानमक लेवे और पानसौ भिलावे लेवे और पीछे कही इन सब औषधोंसे दूनाप्रमाण पुराना जमीकंद लेवे और इन सब औषधोंके समान गुड लेवे ॥ ५० ॥ फिर इनसबोंको कूटके मिलालेवे पीछे १ तोला प्रमाण गोली बांधलेवे यह गोली अतिविशेष गुण है ववासीररोगोंको निवारण करती है और क्षयरोगवाला, सुंदर कांतिसे युक्त पुष्ट होजाता है मंदाग्नि अत्यंत तेज होती है भ्रमका नाश होता है और हृदयरोग, पांडु, शूल, अफारा, भगंदर इन्होंके भयको हरनेवाली है दुष्ट पीडा, ववासीरको नाशती है ॥ ५१ ॥ योगकी युक्तिवाले कांकायनमुनिनें उत्तम औषध कहा है बुद्धिमान् पुरुष इससे सुखको प्राप्त होता है ॥ ५२ ॥

## अथ लवणोत्तमादि ॥

लवणोत्तमं वह्निकलिङ्गवचा चिरबिल्वमहत्पिचुमन्दयुतम् ॥
पिब सप्तदिनं समस्तु लुलितं यदि मर्दितुमिच्छसि वायुरुजाम् ॥५३॥

सेंधानमक, चीता, इंद्रजव, वच, करंजुवा, वंकायन, इन्होंको सातदिनतक पीवे जो यदि आयुके रोगोंको नाशनेकी इच्छा हो तो ॥ ५३ ॥

अथ एलादिगुटिका ॥

विश्वोपकुल्यामरिचानि केसरं पत्रं लवङ्गैलकवृद्धिमाह्वयाः ॥
चूर्णं हितश्च शर्करयुक्तमेतद्गुदामयानामुदरार्त्तिशान्तये ॥ ५४ ॥

सूंठ,१ भाग पीपल, २ भाग मिरच, ३ भाग केशर,४. तेजपात, ५ लोंग, ६ इलायची,७ इन्होंको एकोत्तरवृद्धिभागसे लेवे पीछे इन्होंका चूर्णमें खांड मिला खाना गुदाके रोग और उदरके रोगकी शांतिकेवास्ते हित है ॥ ५४ ॥

अथ अर्शनाशक चतुःसममोदक ॥

सनागरं पुष्करवद्धदारकं गुडो नवो मोदकमम्बुदारुकम् ॥
अर्शःषु दुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम् ॥ ५५ ॥

सूंठ, पौहकरमूल, भिदारा, नवीनगुड, नेत्रवाला, देवदार, इन्होंका मोदक खानेसे ववासीर रोगोंका नाश होता है और वृद्ध पुरुष तत्काल वालकसरीखा निरोग होता है ॥ ५५ ॥

अथ त्रिकटुकाद्यमोदक ॥

त्रिकटुकमभयानां पुष्करं चित्रकाणां कृमिरिपुतिलचूर्णं कारयेत्संगुडेन ॥ उषसि वटकमेकं भक्षयेद्यो मनुष्यो विनिहितगुदरोगश्चाग्निवृद्धिं करोति ॥ ५६ ॥

सूंठ, मिरच, पीपल, हरडै, पौहकरमूल, चीता, वायविडंग, तिल इन्होंका चूर्ण बना तिसमें गुड मिला जो मनुष्य प्रातःकाल इस मोदकको भक्षण करता है उसके गुदाके रोग दूर होते है और जठराग्निकी वृद्धि होती है ॥ ५६ ॥

अथ मरिचाद्यमोदक ॥

मरिचं नागरचित्रं सूरणभागोत्तरेण संकुट्य ॥ सर्वसमो गुडयुक्तो मोदको विल्वप्रमाणं सेवेत् ॥ विनिहितपित्तविकारं क्षयति मनुजानां करोति तनुपुष्टिम् ॥ ५७ ॥

मिरच, १ भाग सूंठ, २ चीता, ३ जमीकंद ४ इन्होंको एकोत्तरवृद्धिभागसे लेवै फिर कूटके इनसवोंके समान गुड मिला मोदक बांध लेवै फिर चार तोला इस मोदकको भक्षण करै यह मोदक मनुष्योंके पित्तके विकारको नाशता है और मनुष्योंके शरीरकी पुष्टि होती है ॥ ५७ ॥

अथ सूरणपिंड॥

त्रिसमगतसूरणकन्दो लोहितवर्णेन यो भवेन्मनिमान् ॥ षट्खण्डीकृतवानपि संशुष्कान्षोडशान्भागान् ॥ ५८॥ तस्यार्द्धेन तुलितश्चित्रकशुण्ठ्यौ च तत्र संयोज्या ॥ मरिचस्य चैकभागो गुडेन वद्धस्तु मोदको मनुजैः ॥ ५९ ॥ भक्षित एव हि गुणवान्निहन्ति सकलान्गुदामयान् ॥ त्वरितमग्नेर्दीपनमुक्तं गुल्मानां जठररुजाम् ॥ ६० ॥

तीनोंतर्फसे समान और लाल वर्णवाला ऐसे जमीकंदको लेके तिसके छह टुकडे बना तिन्होंको सुखालेवे यह जमीकंद सोलहभाग लेना चाहिये ॥ ५८ ॥ और चीता, सूंठ, इन्हों-को आठ भाग लेवे मिरच १ भाग लेवे पीछे इन्होंको गुडमें मिला मोदक बांधलेवे यह मोदक गुणवाला है ॥ ५९ ॥ और भक्षण कियाहुआ गुदाके सब रोगोंको नाशता है जठराग्निको शीघ्रही दीप्त करता है और गुल्मरोग, जठररोग, इन्होंको शीघ्रही नाशता है ॥ ६० ॥

अथ भीमवटक ॥

त्रिफलमगधजानां मूलतालीसपत्रं क्रिमिरिपुमगधानां पुष्करं चेत्समांशः ॥ मरिचदहनभागश्चैकभागेन शुण्ठी सकलतुलिततुल्यः सूरणस्यैकभागः ॥ ६१ मदनचपलयुक्तं वृद्धदारैलभृङ्गं कृतमिह परिचूर्णं द्विगुणो जीर्णखण्डः॥कृतवटकमुखस्तु प्राश्नुते यो मनुष्यो हरति जठररोगं तस्य चाशु प्रकर्षम् ॥ ६२ ॥ गुदजरुधिरपित्तं कासमन्दाग्निशूलान् क्षयतमकहलीमान् कामलांश्च क्रिमींश्च॥ विदधति वलपुष्टिं दापयेच्चाशु मार्गे प्रवलयति हुताशं योगराजः प्रसिद्धः॥६३॥ योगराजेन युञ्जीत स्मरणेनाप्यगस्तिनः ॥ अस्य योगस्य योगेन भीमोऽपि बहुभक्षकः ॥ ६४ ॥

त्रिफला, पीपलामूल, तालीसपत्र, वायविडंग, पीपल, पोहकरमूल, इन्होंको समानभाग लेवे और मिरच, चीता ये दोनों एक भाग, सूंठ १ भाग और इनसबोंके समान जमीकंद ॥ ६१ ॥ और मैनफल, गठोना, भिदारा, इलायची, भंगरा, इन्होंका चूर्ण और दूनी पुरानी-खांड इन्होंका वटक अर्थात् गोली वना जो मनुष्य खाता है तिसके जठररोग शीघ्रही दूर होजाता है ॥ ६२ ॥ और गुदाका रक्तपित्त, खांसी, मंदाग्नि, शूल, क्षयरोग, तमक, श्वास, हलीमक, कामला, क्रिमि, इनरोगोंको नाशता है और बल पुष्टि इन्होंको बढाता है जठराग्नि-को तेज करता है यह सब योगोंका प्रसिद्ध राजा है ॥६३॥ इसयोगराजको अगस्तिमुनिका स्मरण करके प्रयुक्तकरै इसयोगके प्रतापसे भीमभी बहुतसे भोजनको भक्षण किया करता॥६४॥

अथ चव्याद्यघृत ॥

चव्यं पाठा त्रिकटु मगधा मूलकरतुम्बुरूणां विल्वाजाजीरजनिसुरसा पथ्यया सैन्धवं च ॥ पिष्ट्वा चैतत्समगविघृतं पाचयेत्सुप्रयुक्तं पानाभ्यङ्गे हरति गुदजान्वातरोगाश्मरीं च ॥ ६५ ॥

चव्य, पाठा, त्रिकटु, सूंठ, मिरच, पीपल, पीपलामूल, धनियां, वेलगिरी, जीरा, हलदी, तुलसी, हरडै, सेंधानमक, इन्होंको वराबरके गौके घृतमें पीस और पकावे यह घृत पीनेंसे और मालिस करनेंसे गुदाके रोग, वातरोग, पथरी, इन्होंको नाशता है ॥ ६५ ॥

अथ पिप्पल्याद्यतैल ॥

श्यामा कुष्ठं मधुकमदनं पुष्पकं चित्रकश्च विल्वं दारु प्रतिविषशताह्वा कलिङ्गाशठीनाम्॥ पिष्ट्वा तैलं द्विगुणपयसा पाचितं चानुवासे चाभ्यङ्गे वा हितमपि गुदव्याधिनिर्णाशहेतोः ॥ ६६ ॥ वातव्याधिश्रवणरुधिरे कर्णशूलेऽश्मरीणां जङ्घापृष्ठे कटिशिरःशिरावेक्षणे वाततोदे ॥ विष्ठाबन्धग्रहनिग्रहनिःसारके मूढगर्भे श्रेष्ठं तैलं सकलनिचयव्याधिसंधारणेन॥६७॥

पीपली, कूठ, मुलहटी, मैनफल, मैनफलका पुष्प, चीता, बेलगिरी, देवदार, अतीश, शतावरी, इंद्रजव, कचूर, इन्होंको तेलमें पीस फिर दूनें दूधमें पका इसको अनुवासन वस्तिमें और मालिसमें वरतै यह गुदाकी व्याधिके नाशके हेतुमें हित है ॥ ६६ ॥ और वातव्याधि, कानका रुधिररोग, कर्णशूल, पथरी, जांघ, पीठ, कटि, शिर, इन्होंका रोग नाडियोंका फुरणा, वातका चभका, मलका वंधा, इन्होंको नाशता है ग्रहदोषको दूर करता है मूढगर्भको दूर करता है यह तैल संपूर्णव्याधियोंको नाशता है ॥ ६७ ॥

अथ भीमसेननामकवटक ॥

मुस्ता विश्वविडङ्गचव्यकशठी पथ्या च तेजोवती दन्तीन्द्राग्निवृता समांशकपली मात्रा च प्रत्येकशः ॥ तस्माच्चाष्टपलान् पुरुष्करमपि षड् वृद्धदारोपलान् युञ्ज्यात्पोडशसूरणाख्यसलिलद्रोणेऽखिलं कल्कितम् ॥६८॥ भूतं भूयः पचेद्गुडत्रिगुणितं युञ्ज्याद्भवेद्वादिनमुद्धृत्य पुनरेव चित्रकत्रिवृत्तेजोवती सूरणम् ॥ एलापत्रकनागकेशरलवङ्गानां समं चूर्णितमेषां षोडशभागयोग्यविहितं सर्वश्च तं चैकतः ॥ ६९ ॥ स्थाप्यं स्निग्धघटे प्रभातसमये भक्षेदक्षमात्रं वटं जीर्णे क्षीरमपि प्रभूतमतिमान् पा

ने तथा भोजने ॥ अर्शोगुल्मभगन्दरान् ग्रहणीपाण्डुरोगं च कामलां शूलश्चाथ विबन्धकासक्षतजराजयक्ष्माग्निहन्ति ॥ ७० ॥

नागरमोथा, सूंठ, वायविडंग, चव्य, कचूर, हरडै, तेजबल, जमालगोटाकी जड, इंद्रायण, निशोत, इनसबोंको समान भाग चार २ तोला प्रमाण लेवे और पौहकरमूल ३२ तोले लेवे भिदारा २४ तोले प्रमाण लेवे जमीकंद ६४ तोला प्रमाण लेवै फिर इन्होंका कल्क बना १०२४ तोले प्रमाण जलमें पकावे ॥ ६८ ॥ पीछे करडा होजावे तब तिगुना जल मिला फिर पकावे पीछे इसको नीचे उतारि इलायची, तेजपात, नागकेशर, लौंग, इन्होंको समान भागले चूर्ण बनाके तिसमें मिला देवै और इन्होंका चूर्ण इन औषधोंसे सोलहमां भाग मिलाना चाहिये ॥ ६९ ॥ पीछे इसको चीकनें बरतनमें घाल धरै फिर इसको प्रातःकाल एक तोला प्रमाण भक्षण करै पीछे यह चूर्ण जरजावे तब दूध पीवे और भोजनमेंभी दूधको वरतै और ववासीर, गुल्म, भगंदर, संग्रहणी, पांडुरोग,कामला, शूल, मलका बंधा, खांसी, क्षतजरोग, राजयक्ष्मा, इनरोगोंको नाशता है ॥ ७० ॥

## अथ भल्लातकगुड ॥

भल्लातकानां द्विसहस्रकाणां द्रोणे जले पाच्यपदावशेषम् ॥ क्वाथे तु तस्मिन् विपचेद्गुडस्य तुलाप्रमाणं पुनरेव तत्र ॥ ७१ ॥ भल्लातकानां शतपञ्चकानि तत्रैव संयोज्य पलत्रिकं वा ॥ व्योषं जवानीघनसैन्धवानामेलालवङ्गं दलनागकेशरम् ॥ प्रत्येककर्षं तुलितं नियोज्यम् ॥ ७२ ॥ संकुट्य तैले घृतभाजने वा स्थाप्यं प्रभाते वटकप्रमाणम् ॥ भक्षेद्गुडं स तु निहन्ति रोगान्भगन्दरार्शःक्रिमियक्ष्मपाण्डून् ॥ ७३ ॥ गुल्माश्मरीमेहहलीमकं वा सरक्तपित्तं ग्रहणीं निहन्ति ॥ करोति पुष्टिं बलमातनोति वर्णप्रकर्षं सुखमादधाति ॥ ७४ ॥

दोहजार भिलावोंको १०२४ तोले जलमें पकावे जब चतुर्थांश बाकी रहे तब उतारि तिसक्वाथमें ४०० तोले गुडको पकावे ॥ ७१ ॥ पीछे तिसमें पानसौ भिलावे मिलावे और त्रिफला, सूंठ, मिरच, पीपल, जमान, नागरमोथा, सेंधानमक, इलायची, लौंग, तेजपात, नागकेशर, इन्होंको एक २ तोला प्रमाण गेरै ॥ ७२ ॥ पीछे इन्होंको अच्छी तरह कूटके मिला तेलके अथवा घृतके चीकनें पात्रमें घाल धरै पीछे प्रभातसमय इसको वडाके प्रमाण भक्षण करै यह गुड भगंदर, ववासीर, क्रिमि, राजयक्ष्मा, पांडु, ॥ ७३ ॥ गुल्म, पथरी, प्रमेह, हलीमक, रक्तपित्त, संग्रहणी, इनरोगोंको नाशता है और पुष्टि करता है बलको वढाता है वर्णको सुंदर करता है सुख करता है ॥ ७४ ॥

अथ अन्यभल्लातकगुड ॥

दशमूलकगुडूचिसठीक्षुरकं सहचित्रकभार्ङ्गीफलासहितम् ॥ भल्लातकंपंचशतं प्रदिशेद्विपचेज्जलद्रोणमितेन तच्च ॥ ७५ ॥ गुडजीर्णशतं प्रदद्त्क्वथितमवतार्य्य सुशीतलमेलसमम् ॥ दलकेसरभृङ्गलवङ्गयुतं कृतचूर्णमिदं सकलैकमिति ॥ ७६ ॥ घृतभावितमेकदिनं विदधीकृतभाजनके दिनसप्तमिदम् ॥ स्निग्धघटे च विदधीत मनुष्यो दत्तमिदञ्च गुदजामयसङ्घे ॥ ७७ ॥ मोदकमेकमुषस्सु ग्रसेत्तथा विनिहन्ति गुदामयमेहरुजः ॥ हन्ति कासहलीमककामलकं हितमेव हुताशनदीप्तिकरम् ॥ ७८ ॥ यस्तु शीतजले क्षिप्तो जलेनैव विलीयते ॥ लोहितो लोहितां याति चैकपाको गुडस्य च ॥ ७९ ॥

दशमूल, गिलोय, कचूर, गोखरू, चीता, भारंगी, त्रिफला, पानसौ, भिलावे, इन्होंको १०२४ तोले जलमें पकावे॥७५॥ पीछे इस क्वाथमें बराबर पुरानागुड मिला पकाके नीचे उतारी शीतलहो जावे तब तेजपात, केशर, भंगरा, लौंग, इन्होंका चूर्ण बना तिसमें मिला ॥ ७६ ॥ फिर एकदिनतक घृतमें भावनादे पीछे सातदिनतक घृतके पात्रमें घाल रक्खे पीछे चीकनें पात्रमें इसको घालधरै इसमोदकको गुदाके रोगोंके समूहोंमें खावै ॥ ७७ ॥ एक मोदक, प्रातःकाल खावै गुदाके रोग, प्रमेह, खांसी, हलीमक, कामला, इन रोगोंको नाशता है और जठराग्निको दीप्त करता है ॥ ७८ ॥ और जो जलमें गेरा हुआ डूब जावे और लाल लाल वर्णवाला हो जावे यह गुडका पाकका लक्षण हैं ॥ ७९॥

अथ भल्लातकावलेह ॥

ग्रन्थिकं चित्रकं मुस्तं चविकं त्रिफलामृता ॥ सहदेवी गजकणापामार्गश्च कुठेरकम् ॥८०॥ प्रत्येकं चतुष्पालिकं कल्के द्रोणाम्भसा सुधीः॥ द्वे सहस्रे समे पिष्टे भल्लातक्याः फलानि तु ॥ ८१ ॥ पादावशेषे कल्के च लोहचूर्णं तुलार्द्धकम् ॥ क्षिपेत्कुडद्वयं सर्पिः सर्वं चैकत्र घट्टयेत् ॥ ८२ ॥ फलत्रिकं तथा व्योषं चित्रकं लवणाष्टकम् ॥ विडङ्गानि समांशानि सर्वाणि पलमात्रया ॥ ८३ ॥ चतुष्पलं वृद्धदारोर्मूर्वाख्या तु चतुष्पला ॥ संशुष्कसूरणं कन्दं चूर्णं चाष्टपलोन्मितम् ॥ ८४ ॥ संक्षिप्य

खादयेच्चूर्णमवतार्य्य सुशीतले ॥ स्थापितं मधु संयोज्यं कुडवद्वयमात्र या ॥ ८५ ॥ देयं गुदामये चादौ कल्कमप्रातराशने ॥ अर्शांसि ग्रहणी रोगं कामलाराजयक्ष्मणः ॥ ८६ ॥ गुल्मक्रिमीनश्मरीं च मन्दाग्निमेहशोणितम् ॥ नाशयत्याशु यक्ष्माणं करोति बलमाकृतेः ॥ ८७ ॥ आशु वृद्धिं प्रकुरुते वलीपलितनाशनम् ॥ रसायनस्य योगेन नरो नागवलो भवेत् ॥ ८८ ॥

गठोना, चीता, नागरमोथा, चव्य, त्रिफला, गिलोय, सहदेवी, गजपीपली, ऊंगा, आजवला, ॥ ८० ॥ इन सबोंको १६ सोलह २ तोला प्रमाण लेवे पीछे कल्क बना एक हजार चौवीस १०२४तोले प्रमाण जलमें पकावे और दो हजार भिलावोंका कल्क बना तिसका क्वाथ बनावे॥८१॥जब चतुर्थांश बाकी रहे तब उतारि२००तोले प्रमाण लोहाका चूर्ण मिलावे और ३२ तोला प्रमाण घृत मिला पीछे एक जगह घोटे ॥ ८२ ॥ पीछे त्रिफला, सूंठ, मिरच, पीपल, चीता, आठ प्रकारके नमक, वायविडंग, इनसबोंको चार २ तोला प्रमाण लेवे॥८३॥ और भिदारी १६ तोले, मूर्वा, १६ तोले और सूखाहुआ जमीकंद ३२ तोले प्रमाण लेवे इन्होंका चूर्ण बना तिस पाकमें गेरदेवै ॥ ८४ ॥ पीछे शीतल होजावे तब ३२ तोला प्रमाण शहद मिलावे ॥ ८५ ॥ पीछे गुदाके रोगकी निवृत्तिके वास्ते इस कल्कको प्रातःकाल खावै, बवासीर, संग्रहणी, कामला, राजयक्ष्मा इन रोगोंको नाशता है ॥ ८६ ॥ और गुल्म, क्रिमि, पथरी, मंदाग्नि, प्रमेह, रक्तरोग, इनरोगोंको नाशता है और बल आकृति, इन्होंको बढाता है ॥ ८७ ॥ धातुओंकी वृद्धि करता है बुढापाके सफेद बालोंको दूर करता है इस रसायनके योगसे मनुष्य हस्तीके समान बलवाला होता है ॥ ८८ ॥

## अथ रक्तकी बवासीरकी चिकित्सा ॥

रक्तार्शसामुपचारं वक्ष्यामि शृणु पुत्रक !॥ प्रातस्तिलान्भक्षयेच्च नवनीतविमिश्रितान् ॥ ८९ ॥ सितानागरकयुक्तं नवनीतं सशर्करम् ॥ केसरं मातुलुङ्गस्य विडङ्गशर्करायुतम् ॥ ९० ॥ भक्षेत्कूष्माण्डकालेहं नवनीतेन शर्कराम् ॥ एतेन रक्तगुदजाञ्छमयन्ति विचक्षणाः ॥९१ ॥ समङ्गा शाल्मलीपुष्पं चन्दनं ककुभत्वचम् ॥ नीलोत्पलमजाक्षीरं पिष्ट्वा पानमसृग्गदान् ॥ ९२ ॥ कुटजमूलसकेसरमुत्पलं खदिरधातुकिमूलशृतं पयः ॥ पिबति भक्षणयोगमसृग्भवं गुदजनाशनकारिविकारणम् ॥ ९३ ॥

अब रक्तके ववासीरकी चिकित्साको कहते हैहे पुत्र! सुन तिलोंको नौनीघृतमें मिला प्रातः भक्षण करै॥८९॥ और मिसरी, सूंठ, नौंनीघृत, खांड, इन्होंको मिला खावै और विजौराकी केशर, वायविडंग, खांड, इन्होंको खावें॥९०॥ अथवा कोहलेके अवलेहको नौंनीघृत और खांडके संग खावे, इन इलाजोंसे वैद्यजन रक्तकी ववासीरोंको शांत करै॥९१॥ और मंजीठ, सालवणका पुष्प, चंदन, अर्जुनवृक्षकी छाल, नीलाकमल, इन्होंको वकरीके दूधमें पीस पीनेंसे रक्तके रोगोंका नाश होता है॥९२॥ कूडाकी छाल, और जड, कमलकेशर, खैरकी जड, धवकी जड, इन्हेंमें दूधको पका क्वाथ वना जो मनुष्य पीवता है तिसकी गुदाके रक्तके रोगोंका नाश होता है॥९३॥

## अथ वर्त्तियोग ॥

कुक्कुटस्य पुरीषञ्च तथा पारावतस्य च॥ गृहधूमं च सिद्धार्थं धत्तूरकदलानि च॥ काञ्जिकेन च संपिष्य वर्त्तिं सञ्चारयेद्गुदे ॥ ९४ ॥ सूरणं कन्दकवर्त्तिर्विधेया मल्लीरसेन घृतेन च लिम्वा॥ रोगगुदे गुदकीलकमाशु नाशयते गुदजांश्च क्रिमींश्च ॥ ९५ ॥ हरिद्रा मार्कवं कुष्ठं गृहधूमं सुवर्चलम्॥ सिद्धार्थकरसश्चैव काञ्जिकेन च पिष्यते॥ ९६ ॥ मधुना सह वर्त्तिः स्याद्गुदे सञ्चारिता यदि ॥ अर्शसां नाशनं चैव करोति सहसा नृणाम्॥ ९७॥

मूरगाकी वींट, कवूतरकी वींट, घरका धूवां, सिरसम, धतुराके पत्ते, इन्होंको कांजीमें पीस गुदामें वत्ती चढानीं चाहिये॥९४॥ और जमीकंदकी वत्ती वना मोगरीके रससे और घृतसे लीपि गुदामें चढानेंसे गुदकीलक, गुदाके क्रिमि, इन रोगोंका नाश होता है॥९५॥ और हलदी, भंगरा, कूट, घरका धूवां, कालानमक, इन्होंको सिरसमके रसमें और कांजीमें पीस॥९६॥ पीछे शहद मिला वत्ती वना गुदामें चढानेंसे शीघ्रही ववासीररोगोंका नाश होता है॥९७॥

## अथ देवदाल्यादि लेप ॥

देवदालीपलसम्मितञ्च हुतभुग्व्योषं रसानां गणान्षड्ग्रन्थापिचुमन्दवारिकणाभार्ङ्गीशिलातैलकम्॥ पिष्ट्वा श्लक्ष्णसमस्तकाञ्जिकयुतं दत्वा शिलालेपनं दुर्नामानि हन्ति तथैव गुदजान्सर्वातिसारामयान्॥ ९८ ॥

ताडका मस्तक, चीता, व्योष अर्थात् सूंठ, मिरच, पीपल, इन्होंको चार २ तोला प्रमाण

लेवे पीछे इन्होंका रस निकास लेवे और वच, नींव, नेत्रवाला, पीपली, भारंगी, शिलाजीत, इन्होंको समान भागले पीछे, तेलमें और कांजीमें तथा पूर्वोक्त औषधोंके रसमें इन्होंको बारीक पीस शिलापे लीप देवे पीछे शिला ऊपरसे उतार गुदापे लगानेसे ववासीर, सब प्रकारके अतिसार इन्होंका नाश होता है ॥ ९८ ॥

## अथ अर्शोरोगपरशस्त्रादिकर्म ॥

यन्त्रं शस्त्राग्निकार्यञ्च कथितं तत्तु शल्यके ॥ यथा यन्त्रेण छिद्यन्ते दाहस्तत्र विधेयकः ॥ ९९ ॥ चर्मकीलं तथा छित्त्वा दग्धं क्षारेण धीमता ॥ पक्वजम्बूसमो वर्णो क्षारदग्धे प्रशस्यते ॥ १०० ॥ दग्धं वा सूरणक्षारं कदलीजीवमुद्गकैः ॥ पलाशकोकिलाक्षारमपामार्गघृतान्वितम् ॥ १०१ ॥ क्षारदाहे प्रशस्येत नवनीतघृतेन वा ॥ कुष्ठं पथ्या तथा निम्बपत्राणि च मनःशिला ॥ १०२ ॥ तस्मान्मधुघृतमिश्रं निर्धूमाङ्गारके क्षिपेत् ॥ धूपयेद्गुदजांतेन यथा सम्पद्यते सुखम् ॥ १०३ ॥ मनःशिलानागरकं सगुग्गुलं ससार्षपम् ॥ देवदारु सपौष्करं विशल्यासर्जिकारसम् ॥ १०४ ॥ घृतेन धूपयेद्गुदजं गुदामयं भगन्दरम् ॥ निहन्ति दुष्टपीनसं व्रणं सपूयगन्धिकम् ॥ १०५ ॥ निर्गुण्डीदलपत्रहरितालं तथा सार्षपचूर्णकं देवाह्वं घृतशर्करामधुयुतं धूपं गुदजादिके ॥ दुर्नामे सरुजे व्रणे च विषमे दुष्टे विसर्पेषु च पामापीनसकासनाशनकरो धूपो महोच्छेदनः ॥ १०६ ॥

और यंत्र, शस्त्र, तथा अग्निकर्म कहा है वह शल्यरोगमें करै और जो यंत्रसे छेदन कियाजावे तहां दाह करना चाहिये ॥ ९९ ॥ और चर्मकीलको छेदन करके क्षारसे दग्ध करै और जो पकाहुआ जामनके फलके समान वर्णवालाहो वह क्षारसे दग्ध करना श्रेष्ठ कहा है ॥ १०० ॥ और जमीकंदका खार, केला जीवक, मूंग इन्होंका खारसे दग्ध करना श्रेष्ठ कहा है और केशू, कोलिस्ता, ऊंगा इन्होंका खारको घृतमें युक्तकर अथवा नौंनीघृतमें युक्तकर ॥ १०१ ॥ क्षारदाह करना श्रेष्ठ कहा है और कूठ, हरडै, नींबके पत्ते, मनसिल, ॥ १०२ ॥ इन्होंको शहदमें मिला धूवांसे रहितहुआ अंगारपे गेरै पीछे तिस्से गुदाके मस्सोंकै धूमनी देवै तब रोगीको सुख प्राप्त होता है ॥ १०३ ॥ और मनसिल,

सूंठ, गूगल, सिरसम, देवदार, पौहकरमूल, कलहारी, साजीखार, ॥ १०४ ॥ इन्होंको घृतमें मिला धूप देनेंसे ववासीरका मस्सा, गुदाके रोग, भगंदर, दुष्टपीनस, रादिकी गंधसे युक्त व्रण, इन्होंको नाशता है ॥ १०५ ॥ संभालूके पत्ते, तेजपात, हरताल, सिरसमका चूर्ण, देवदार, इन्होंको घृत, खांड, शहद इन्होंमें मिला धूप देनेंसे गुदाके रोग दूर होते हैं पीडासहित ववासीर, विषम और दुष्ट विसर्परोग, पाम, पीनस, खांसी, इनरोगोंको नाशता है और यह धूप ग्रहदोषको दूर करता है ॥ १०६ ॥

## अथ अर्शरोगमें पथ्य ॥

एवं क्रियाविधिः प्रोक्तश्चातः पथ्यानि मे शृणु ॥ शालिषष्टिकमुद्गाश्च कुलत्थाढक्यवास्तुकम् ॥ १०७ ॥ चिल्ली च शतपुष्पा च कूष्माण्डक पटोलकम् ॥ कारवेल्लं च तुण्डीरं सूरणो राजिकार्जकम् ॥ १०८ ॥ गुडस्तक्रं घृतं चैतत्प्रशस्यन्तेऽर्शसां सदा ॥ सूकरः शल्लकी गोधा मूषको वा सरीसृपः ॥ १०९ ॥ लावतित्तिरवार्त्ताकमांसानि कथितानि च ॥ ११० ॥ वल्लूरमत्स्यदधिपिच्छलतैलविल्ववार्त्ताकभोजनमतिप्रतिवर्जनीयम् ॥ निशाकृति निशि दिवा शयनञ्च शीतं शीतान्नमेव परिवर्जितमादरेण ॥ १११ ॥ इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने अर्शश्चिकित्सा नामैकादशोऽध्यायः ॥ ११ ॥

इस प्रकारसें क्रियाओंकी विधि कही है अब पथ्यवस्तुओंको कहते हैं शालिसंज्ञक चावल, सांठी चावल, मूंग, कुलथी, तुरीधान्य, वथुवा ॥ १०७ ॥ चिल्लीशाक अर्थात् वथुवाका भेद, सौंफ, कोहला, परवल, करेला, तोरी, जमीकंद, सिरसमकी डांकल, इन्होंका भोजन और शाक हित कहा है ॥१०८॥ और गुड, तक्र, घृत, ये ववासीरवालोंको हित है और शूर, शेह, गोह, मूंसा, सर्प, आदि ॥ १०९ ॥ लावा, तीतर, वत्तक, इन्होंके मांस पथ्य कहे हैं ॥ ११० ॥ और शूखामांस, मत्स्यका मांस, दही, झागोंवाला पदार्थ, तेल, वेलगिरी, वत्तकका मांस, इन्होंका ज्यादै भोजन नहीं करै और रात्रीमें प्रकृतिके अनुसार शयन करै दिनमें नहीं सोवै और शीतल पदार्थोंको वर्ज देवै ॥१११॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां तृतीयस्थाने एकादशोऽध्यायः ॥११॥

पजविद्विषाम् ॥ कृशानां हितमेवं स्यात्सुखोपायविरेचनम् ॥ ६ ॥ हरीतकी दरिद्राणामनपायरसायनम् ॥ पथ्यस्यान्तेऽथवा चादौ भक्षेच्चामयनाशिनीम्॥७॥ तृषातुराणां हृदि कण्ठशोषे हनुग्रहे चापि गलग्रहे च॥नवज्वरे क्षीणबलेन्द्रियाणां न गर्भिणीनां कथिता प्रशस्ता ॥ ८ ॥ हरीतकी वा गुडनागरेण सिन्धूत्थयुक्ता कथिता प्रयोगे ॥ आमाशयस्था जठरामयश्च जघान चेन्द्रायुधवद्द्रुमाणाम् ॥ ९ ॥ सशारदे वा सितया प्रयुक्ता शुण्ठी गुडेनापि हिमे प्रयोज्या ॥ ससैन्धवपिप्पली शैशिरे च हितो वसन्ते त्रिकटुर्गुडेन ॥ १० ॥ ग्रीष्मे सितानागरकैश्च पथ्या वर्षासु सिन्धूत्थयुता हिता च ॥ निहन्ति सर्वामयमेव सद्यो घृतेन पथ्या विहिता हरीतकी ॥ ११ ॥ घृतेन देयं मनुजाय कल्कं आमानिलं हन्ति नरस्य कोष्ठे ॥ दुष्टान्विकारान्हरतीति सद्य एरण्डतैलेन विपाच्य पथ्यम् ॥ १२ ॥ खादेत्तदेवानुपिबेच्च तैलं सशूलविष्टम्भकृतान्विकारान् ॥ सर्वाञ्जयेत्पित्तकफानिलोत्थान्मूत्रे स्थितं सप्तदिनं महिष्याः ॥ १३॥ पञ्चाभया मूत्रपलानि पञ्च क्षीरेण सप्ताहमतिप्रशस्तम् ॥ क्षीरोदशोषी परतस्तथान्ये एष त्रिसप्तादपरः प्रयोगः ॥१४॥ वातोदरं शीघ्रमियं निहन्यात्प्लीहानमानाहमुरोग्रहञ्च ॥ सपाण्डुरोगञ्च क्रिमींश्च हन्ति हरीतकी धान्यतुषाम्बुसिद्धा ॥ १५ ॥ सपिप्पलीसैन्धवयुक्तचूर्णं सोद्गारधूपं भृशमप्यजीर्णम् ॥ निहन्ति सद्यो जनयेत्क्षुधांश्च कल्कश्च तस्याः सह नागरेण ॥ १६ ॥ ज्वरं जहाति सह सैन्धवेन दध्ना च तक्रेण हितातिसारे ॥ सराजयक्ष्मे मधुनावलिह्यान्मूत्रेण शोफोदरनाशहेतोः॥१७॥ सपाण्डुरोगे समशर्करायाः शोषे सदाहे सह मातुलुङ्ग्या ॥ रसेन युक्ता विहितातिपथ्या कल्कं समाप्तं कथितं मुनीन्द्रैः ॥ १८ ॥ इत्यात्रेयभाषिते हारीतोत्तरे कल्कस्थाने हरीतकीकल्कवर्णनभेदोनाम तृतीयोऽध्यायः॥ ३ ॥

आत्रेयजी कहते हैं—अभया दो अंगुल प्रमाणकी होती है पूतना चार अंगुल प्रमाणकी होती है जीवंती डेढ अंगुल प्रमाणकी होती है चेतकी छह अंगुल प्रमाणकी होती है

॥ १ ॥ तहां आकारसे और वर्णसे चेतकी हरडे दो प्रकारकी कही है तहां छह अंगुल प्रमाणवाली काली कही है और एक अंगुल प्रमाणवाली सफेद कही है ॥ २ ॥ तहां जुला-बकेवास्ते काली चेतकी हरडे श्रेष्ठ कही है ॥ ३ ॥ और जबतक चेतकी हरडेके वृक्षके नीचे स्थित रहै तबतक पशु पक्षीआदिकभी भेदन होते है दस्त लगजाते है मनुष्योंकी तो कौन बात है ॥ ४ ॥ और मनुष्य जबतक चेतकी हरडैको हाथमें रक्खे तबतक उसके दस्त लगे रहते है और रोगोंका नाश होजाता है ॥ ५ ॥ और राजे तथा सुंदर कोमल शरीरवाले जन अथवा जिन्होंसे औषध नहीं लीजावे ऐसे मनुष्य कृश, ऐसे मनुष्योंके सुखके उपायकेवास्ते यही जुलाब दिवानी कही है ॥ ६ ॥ दरिद्री पुरुषोंको द्रव्य खरचकरें विनाही यह हरडै र-सायन रूप औषध कही है पथ्य भोजनके अंतमें अथवा आदिमें भक्षणकीहुई यह हरडै रोगोंको नाशनेवाली कही है ॥ ७ ॥ और तृषासे पीडित पुरुष, हृदा, कंठ, इन्होंमें शोषवाले हनुग्रह तथा गलग्रहरोगवाले नवीनज्वर क्षीणबलइंद्रियवाले पुरुष गर्भिणी स्त्री इन्होंको यह हरडै देनी पथ्य नहीं कही है ॥ ८ ॥ और गुड, सूंठ, सेंधानमक, इन्होंकेसंग हरडैको देवे तो आमाशयमें स्थित होनेंवाले उदररोगोंका ऐसे नाश होता है कि जैसे बिजलीसे वृक्षोंका नाश होजाता है ॥ ९ ॥ शरद ऋतुमें मिसरीकेसंग देनी और हिमऋतुमें गुड, सूंठ, इन्होंकेसंग देनी शिशिरऋतुमें सेंधानमक, पीपली, इन्होंकेसंग देनी और वसंतऋतुमें सूंठ, मिरच, पीपली, गुड, इन्होंकेसंग देनी हित है ॥ १० ॥ और ग्रीष्मऋतुमें मिसरी, सूंठ इन्होंकेसंग देनी पथ्य है और वर्षासमयमें सेंधानमकके संग देनी हित कही है और घृतके संग हुई यह हरडै सब रोगोंको नाशती है ॥ ११ ॥ और इसका कल्क बना घृतकेसंग देनेंसे मनुष्यके कोष्ठकी आमवातका नाश होता है और दुष्ट विकारोंको तात्काल नाशती है और अरंडीके तेलमें पकाके देना पथ्य है ॥ १२ ॥ और त्रिफलाको खाके तिसपे यही तेल पीवे तो शूल मलका बंधाके कियेहुए विकार इन्होंका नाश होता है और पित्त, कफ, वात, इनसे उपजे सब विकारोंके नाशकेवास्ते, महिषीके मूत्रमें सात दिनतक स्थापित कियाहुआ त्रिफलाको खावे ॥ १३ ॥ और पांच हरडै बीस तोले गोमूत्रमें और दूधमें स्थापितकर रक्खै सात दिनतक स्थापित करनां श्रेष्ठ कहा है और कईक वैद्य ऐसे है कि सात दिन पीछे दूध और गोमूत्र शूख जावे तबतक स्थापित रक्खै और कइक ऐसे कहते है कि इकीसदिन पीछेतक स्थापित रक्खै ॥ १४ ॥ इस प्रकारसे सिद्धकीहुई यह हरडै वातोदर रोग तिल्ली अफारा छातीको ग्रहण करनेंवाला रोग इन रोगों-को नाशता है और धान्यकी कांजीमें सिद्धकीहुई हरडै पांडुरोग, क्रिमिरोग इन्होंका नाश करती है ॥ १५ ॥ पीपली, सेंधानमक इन्होंके चूर्णकेसंग दीहुई हरडै अढकारका धूवां अ-त्यंत अजीर्ण इन्होंका नाश करती है और तत्काल क्षुधाको उत्पन्न करती है और सूंठके संग इसका कल्क देनेंसे ॥ १६ ॥ तथा सेंधानमकके संगदेनेंसे ज्वरको नाशती है और दही

तथा तक्रके संगदेनेसे अतिसारको नाशती है राजयक्ष्मा रोगमें शहदकेसंग चाटे और शोजा उदररोग इन्होंके नाशकेवास्ते गोमूत्रके संग देवै ॥ १७ ॥ पांडुरोगमें बराबरकी खांडकेसंग और दाह, शोष इन्होंमें बिजौराके संग देनी हित कही है इस प्रकारसे मुनियोंसे कहाहुआ यह हरडैका कल्क समाप्त होचुका है ॥ १८ ॥ इति बेरीनिवासिबुधशिवसहायसूनु०हारीतसंहिताभाषायां पंचमे कल्कस्थाने हरीतकीकल्कवर्णभेदोनाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ॥ ४ ॥

### अथ रसोनकल्कः ॥

अमृतमथने जातः सुरासुरग्रहो महान् ॥ जहार वैनतेयश्च चञ्चुना त्रिदिवं गतः ॥ १ ॥ संग्रामश्रमसंप्राप्ते श्रमवेगप्रधाविते ॥ आरूढे वैक्लवं प्राप्ते च्युता ह्यमृतबिन्दवः ॥ २ ॥ सकृत्संदूषिते देहे पतितास्तत्र संस्थिताः ॥ तस्मात्कालवशाज्जातं दुर्भिक्षं द्वादशाब्दिकम् ॥ ३ ॥ विशुष्काः कानने सर्वा वृक्षकण्टप्रतानिकाः ॥ तस्माच्च ऋषयः सर्वे प्रकष्टं गहनं गताः ॥४॥ तेषां मध्ये जराग्रस्तो गतिहीनोऽतिजर्जरः ॥ सयष्टिः सरणिक्षुण्णः शीर्णदन्तावलीमुखः ॥ ५ ॥ सव्यक्तस्थैः क्षुधापन्नैर्ऋषिभिस्तत्र विश्रुतः ॥ सोऽपि क्षुधातुरः सर्वां पर्य्यटत्युर्वरां महीम् ॥ ६ ॥ कुत्रचित् पुण्ययोगेन दृष्टवान्विटपान् शुभान् ॥ नीलशैवालसङ्काशान् शाद्वलान्बहलान् भुवि ॥ ७ ॥ क्षुधासंपीडनेनापि भुक्तवान् सदलानपि ॥ ८ ॥ षण्मासानन्तरं शुष्कान् विटपांस्तदनन्तरम् ॥ भुक्तवान्कन्दकान् सोऽपि मासमेकं तथा ऋषिः ॥ ९ ॥ पश्चात् सुभिक्षे सञ्जाते सर्वे चैकत्र संस्थिताः ॥ सोऽपि वृद्धो युवा भूत्वा गतस्तत्र च यत्र ते ॥ १० ॥ तं दृष्ट्वा विस्मयापन्नाः पप्रच्छुः किं कृतं त्वया ॥ नोक्तवान् सतु किञ्चिच्च रुषा तैः शापितस्ततः ॥ ११ ॥ यत्त्वया खादितं द्रव्यं तदभक्ष्यं द्विजातिभिः ॥ दुर्गन्धमपि चित्रश्च तस्माज्जातं रसोनकम् ॥ १२ ॥ अथवीर्य्यञ्च वक्ष्यामि रसोनस्य महामते ! ॥ रसैः पञ्चभिः संयुक्तो रसोनस्तेन वर्ज्जितः ॥ १३ ॥

अमृतमथनेके समय देवताओंका और दैत्योंका महान् युद्ध होता भया तब गरुड अमृतको हरके चूंचमें ग्रहणकर स्वर्गमें जातेभये ॥ १ ॥ फिर युद्धकी हारके श्रमसे और मार्गके खेद होनेसे युक्त होगया तब बैठ गया तहां अमृतकी बिंदु गिरती भई वे बूंद ॥ २ ॥ विष्ठासे दूषित हुए किसीके शरीरपे गिरके तहांही स्थित होती भई पीछे कालके वशसे तिस देशमें बारह वर्षतक दुर्भिक्ष काल पडताभया ॥ ३ ॥ तिस वनमें सब वेलवृक्ष पत्ते शूखते भये तिससे सब ऋषि दूर गह्वरवनमें जाते भये ॥४॥ तिन ऋषियोंमें बुढापासे ग्रसितहुआ गमन करनेमें समर्थ नहीं, जर्जर अंगवाला यष्टिकाको पकडे हुए क्षुधासे युक्तहुआ, दात हिलते हुए ऐसा एक ऋषि था ॥ ५ ॥ सो क्षुधामें युक्त हुए कहीं एकांतमें बैगालूम हुए ऐसे अन्यऋषियोंसे विछडताभया पीछे वहभी क्षुधासे युक्तहुआ सब पृथ्वीपे विचरताभया ॥ ६ ॥ पीछे पुण्यके योगसे कहींक सुंदर वृक्षोंको देखताभया और नीली सिवालाके समान कांतिवाले बहुतसे घासोंको पृथ्वीपे देखताभया॥७॥पीछे क्षुधासे पीडित होनेसे तिन वृक्षोंके पत्तोंको खाता भया ॥ ८ ॥ फिर छह महीनें पीछे शूखे वृक्षोंको खाताभया पीछे वह ऋषि एक महिनातक कंद अर्थात् वृक्षआदिकी जडोंको खातेभये तहा लस्सन कंदभी खाया, फिर सुभिक्ष संवत् होगया ॥ ९ ॥ तब सब ऋषि सब ऋषि एक जगह इकट्ठे हुए और वह वृद्ध ऋषिभी जहां बैठे उसी जगह जवान होके आया ॥ १० ॥ तब तिसको देख आश्चर्यमें युक्तहो पूछते भये कि तैनें क्या किया फिर वह कुछभी नहीं बोला तब उन्होंने क्रोध होके शाप देदिया ॥ ११ ॥ कि जो द्रव्य तैनें खाया है वह द्विजाति ब्राह्मणआदि जातियोंको भक्षण करनेको योग्य नहीं है इसवास्ते दुर्गंधवाला और चित्र ऐसा लस्सन होगया ॥ १२ ॥ हे महामते ! अब लस्सनके गुणोंको कहेंगे यह पांच रसोंसे युक्त है और एक रससे वर्जित है इसवास्ते इसको रसोन कहते है ॥ १३ ॥

## अथ लस्सनके गुण ॥

कट्वम्लवीर्य्यो लशुनो हितश्च स्निग्धो गुरुः स्वादुरसोऽथ वल्यः ॥ वृद्धस्य मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरः सुतीक्ष्णः ॥ १४ ॥ हृद्रोगजीर्णज्वरकुक्षिशूलप्रमेहहिक्कारुचिगुल्मशोफान् ॥ दुर्नामकुष्ठानलश्यावजं तु समीरणं श्वासकफान् निहन्ति ॥ १५ ॥ तेन रसोनकं नाम विख्यातं भुवनत्रये ॥ कुक्कुटाण्डनिभं ग्रीष्मे शीर्णपर्णं समुद्धरेत् ॥ १६ ॥ बद्धा पुटे सुनिर्गुप्तं धारयेत्तं महामते ! ॥ वर्षासु शिशिरे चैव कारयेन्मात्रया युतम् ॥ १७ ॥ रामठं जीरके द्वे च अजमोदा कटुत्रयम् ॥ यवक्षारवर्च

लोपेतं वातरोगे विशेषतः ॥ १८ ॥ मातुलुङ्गरसेनापि शूलानाहे प्रकीर्त्तितः ॥ दध्ना वातादिशमनो रसोनो विहितो वुधैः ॥ १९ ॥ जाङ्गलादिरसान्येव भोजनार्थे प्रदापयेत् ॥ २० ॥

लस्सन चर्चरा और खटा है, हित है, स्निग्ध है, भारा है, स्वादु रसवाला है, बलदायक है, वृद्ध पुरुषकी बुद्धि, स्वर,वर्ण, नेत्र, भेग्नअस्थि इन्होंको जोडनेवाला है सुंदर तीक्ष्ण है ॥१४॥और हृदयरोग, जीर्णज्वर, कुक्षिशूल, प्रमेह, हिचकी, अरुचि, गुल्म, शोजा, ववासीर, कुष्ठ वायुसे उपजे हुए क्रिमि वात, श्वास, कफ इन्होंको नाशता है ॥ १५ ॥ पांच रसोंवाला होनेसे यह रसोन नामसे प्रसिद्ध है यह ग्रीष्मऋतुमें मुरगेके अंडेकेसमान होता है शिथिल २ पत्ते होते है ॥ १६ ॥ बुद्धिमान् जन इसको पुटविधिसे बांधके गुप्त धारण रक्खै और वर्षाऋतुमें तथा ग्रीष्मऋतुमें इसको मात्रासे युक्त करै ॥ १७ ॥ और हिंग. दोनों जीरे, अजमोद, सूंठ, मिरच, पीपल, घृत, कालानमक इन्होंसे युक्तकर वातरोगमें देना श्रेष्ठ है ॥ १८ ॥ और विजौराके रसके संग देनेसे शूल, अफारा इन्होंका नाश होता है और दहीके संग दियाहुआ लस्सन वातआदि दोषोंको शांत करता है ॥ १९ ॥ और जांगल देशके जीवोंका रस भोजनमें हित कहा है ॥ २० ॥

## अथ पेयरसोनविधिः ॥

निष्पीड्य च रसं तस्य गृहीत्वा मुनिसत्तम ! ॥ दुग्धेन शर्करोपेतं पित्तरोगे पिवेन्नरः ॥ २१ ॥ राजयक्ष्मक्षये पाण्डौ कामलायां हलीमके ॥ शिरोरुजासु सर्वासु रक्तपित्तभ्रमेषु च ॥ २२ ॥ शोषमूर्च्छापस्मारे च हितं चैतद्रसायनम् ॥ २३ ॥

हे उत्तममुनि ! लस्सनके रसको निचोड तिसमें दूध और खांड मिला पीनेसे पित्तरोग शांत होता है ॥ २१ ॥ और राजयक्ष्मा, क्षयीरोग, पांडुरोग, हलीमक, संपूर्ण शिरके रोग और रक्तपित्तसे उपजे भ्रम॥२२॥ शोष, मूर्च्छा,मृगीरोग इन्होंमें हितहै और रसायन है॥२३॥

परिपिष्य रसोनश्च तत्समा त्रिवृता मता ॥ गुडेनैरण्डतैलेन शीतं दत्त्वा च लेहकम् ॥ २४ ॥ भवत्येतत्समादत्य पाययेन्मूत्ररोगिणम् ॥ शोफे गुल्मे वाऽऽमवाते हितमेतत्तदार्शसाम् ॥२५॥ हरिणशशकलावातित्तिराणाञ्च मांसं कर्करमपि मयूरादिसाराद्यजाद्यम् ॥ घृतमधुररसानां शालिगोन व… णां हितमिति मनुजानां गुग्गुले वा रसोने ॥ २६ ॥ व्यायामध्या

नातपमैथुनानि क्रोधाध्वजीर्णान्परिवर्जयेच्च ॥ विवर्जयेद्वापि तथातिसारे मेहामये पाण्डुगुदामये च॥२७॥न गर्भिणीनां न च बालकानांभ्रमातुरे वा न मदातुरे च ॥ न रक्तपित्ते न च कुष्ठिनेऽपि न रक्तवाते न विसर्पिके च॥ २८ ॥ दत्तो रसोनो यदि मूढबुद्ध्या विरेचनं वा वमनं विधेयम् ॥ न वान्यथा कुष्ठमथापि पाण्डुं त्वग्दोषरोपं कुरुते नरस्य ॥ सुयोगयुक्त्या ऽमृतवन्नराणां वीर्य्येन्द्रियं पुष्टिबलं तनोति ॥ २९ ॥ इत्यात्रेयभाषिते हारीतोत्तरे कल्कस्थाने रसोनकल्को नाम चतुर्थोऽध्यायः ॥ ४ ॥

लस्सनको पीस तिसके समान निशोत मिला और गुड अरंडीका तेल, दालचिनी इन्हों-का अवलेह बनादेनेसे ॥ २४ ॥ मूत्ररोगवाले पुरुषोंके सुख होता है और शोजा, गुल्म, आमवात, बवासीर इन रोगवालोंको हित है ॥ २५ ॥ और हिरन, शूशा, लावा, तीतर, ककेरा, मोर, सारस, बकरा इत्यादिकोंका मांस, घृत, मधुररस, शालिसंज्ञक चावल, गेहूं इन्होंका भोजन करना गूगल तथा लस्सन खानेके पीछे हित कहाहै ॥ २६ ॥ और कसरत, गमन करना, घामसेवना, मैथुन करना, क्रोध, मार्गका श्रम इन्होंको वर्ज देवै और अतिसार प्रमेह, पांडुरोग, गुदाके रोग, इन रोगोंमेंभी इन पिछली कहीहुई वस्तुओंको वर्ज देवै ॥ २७ ॥ और गर्भिणी स्त्री बालक भ्रमातुर पुरुष, मदातुर, रक्तपित्तवाले कुष्ठवाले, रक्तवातवाले, विसर्प रोगवाले इन मनुष्योंको लस्सन नहीं देवै ॥ २८ ॥ और जो यदि मूर्खपनेसे दियाजावे तो जुलाब दिवाना अथवा वमन कराना चाहिये नहीं तो मनुष्यके शरीरमें कुष्ठ, पांडुरोग, त्वक्दोष इन्होंको करदेता है और सुंदर योगयुक्तिसे दियाहुआ लस्सन मनुष्योंको अमृतकेसमान है वीर्य, इंद्रिय, पुष्टि, बल इन्होंको बढाता है ॥ २९ ॥ इति वेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां कल्कस्थाने रसोनकल्कोनाम चतुर्थोऽध्यायः॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥ ५ ॥

### अथ गुग्गुलकल्कः ॥

हारीत उवाच ॥ भगवन् ! गुग्गुलो नाम योगवीर्य्यमथोगुणम् ॥ वक्तुमर्हसि रोगेषु येषु वापि प्रशस्यते ॥ १ ॥ एवमुक्तस्तु शिष्येण प्रत्युवाच महातपाः ॥ २ ॥

हारीत पूछता है-हे भगवन! गुग्गुलनामक औषधके योग वीर्य और गुणको आप कहो जिन २ रोगोंमें श्रेष्ठ कहा है सो सुन ॥ १ ॥ ऐसे शिष्यसे पूछे हुए महान् तपवाले आत्रेयजी प्रतिवचन कहते है ॥ २ ॥

आत्रेय उवाच ॥ मरुभूमौ प्रजायन्ते प्रायशः पुरपादपाः ॥ भानोर्मयूखैः सततं ग्रीष्मे मुञ्चन्ति गुग्गुलम् ॥ ३ ॥ हिमाद्रितो वा हेमन्ते विधिवत्तं समाहरेत् ॥ जातरूपनिभं शुभं पद्मरागनिभं क्वचित् ॥ ४ ॥ क्वचिन्महिषनेत्राभं यक्षदैवतवल्लभम् ॥ विधानं तस्य विधिवन्निबोध गदतो मम ॥ ५ ॥ त्रिदोषशमनो वृष्यः स्निग्धो बृंहणदीपनः ॥ गुग्गुलः कटुकः पाके वर्णप्रवलवर्द्धनः ॥ ६ ॥ आयुष्यः श्रीकरः पुत्रस्मृतिमेधाविवर्द्धनः ॥ पापप्रशमनः श्रेष्ठः शुक्रार्त्तवकरः स्मृतः ॥ ७ ॥ वर्णगन्धरसोपेतो गुग्गुलो मात्रया युतः ॥ भेषजैः सह निष्क्वाथ्यो यथा व्याधिहरैः पृथक् ॥ ८ ॥ मात्रावशिष्टं तं दृष्ट्वा चालयेच्छुक्लवाससा ॥ मृन्मये हेमपात्रे च राजते स्फाटिकेऽपिवा ॥ ९ ॥ पुण्ये तिथौ शुभे भे च जीर्णाहारःक्षमान्वितः ॥ हुत्वाग्निं पर्य्युपासीत देवब्राह्मणभक्तितः ॥ १० ॥ प्रविश्य कुसुमाकीर्णे मन्दिरे च समाश्रिते ॥ रास्ना गुडूची चैरण्डो दशमूलं पृसारिणी ॥ ११ ॥ क्वाथं तेषां यथायोग्यं यवान्या वातिके पिवेत् ॥ पृथक्छृतैर्जीवनीयैः पिवेत्पित्तामयार्दितः ॥ १२ ॥ वासाचन्दनह्रीवेरं मृद्वीका तिक्तरोहिणी ॥ खर्जूरश्च परूपश्च तथा जीवककर्षको ॥ सपित्तरोगे पानाय क्वाथः स्याद्गुग्गुलान्वितः ॥ १३ ॥ त्रिफलाव्योषगोमूत्रनिम्वधान्यकपुष्करैः ॥ अमृता दीप्यकः क्वाथः पटोली च कफार्दितः ॥ १४ ॥ नाडीदुष्टव्रणग्रन्थिगण्डमालार्वुदान्वितः ॥ त्रिफलाक्वाथसंयुक्तं पिवेन्मेही व्रणी तथा ॥ १५ ॥ किरातकामृतानिम्ववृषाव्याघ्रीदुरालभाः ॥ एषां क्वाथेन संयुक्तं गुग्गुलं पाययेद्भिषक् ॥ १६ ॥ गुल्मे कासे क्षते श्वासे विद्रधावरुचौ व्रणे ॥ दार्वीपटोलक्वाथेन संयुतं गुग्गुलं पिवेत् ॥ १७ ॥ कण्डूपिटकशोफाद्ये पिवेद्वातकफापहम् ॥ पथ्या पुनर्नव ... गोमूत्रमम्रतं तथा ॥ १८ ॥ एषां क्वाथो हितः पाण्डौ शोथो-

दरकिलासिनाम् ॥ भवेन्मात्रां पलं यावत्कर्षादारभ्य यत्नतः ॥ १९ ॥ जीर्णेऽश्नीयान्मुद्गयूषैरसैर्वा जाङ्गलैस्तथा ॥ पयसा षष्टिकान्नञ्च शाली नामोदनं मृदु ॥ २० ॥ दिनाः सप्त प्रथमा च मध्यमा द्विगुणाः स्मृताः॥ त्रिगुणाः परमा मात्रा विज्ञेया योगचिन्तकैः ॥ २१ ॥ सेवते गुग्गुलं यो वै वर्षेणापि नरः क्रमात् ॥ स्थावराज्जङ्गमाच्चैव न स्यादस्य क्षतिर्विषात् ॥ २२ निर्मुक्तो वलितत्वचोपि पलितो वृद्धो युवा जायते मेधादृष्टिवलौजवीर्य्यमधिकं वृद्धत्वहीनो भवेत् ॥ गुल्माष्ठीलहृदामवातशमनः कुष्ठं प्रमेहाश्मरीं शूलानाहविसर्परक्तशमनो भूतोपसृष्टे हितः ॥ २३ ॥ इत्यात्रेयभाषिते हारीतोत्तरे कल्कस्थाने गुग्गुलकल्को नाम पञ्चमोऽध्यायः५

आत्रेयजी कहते हैं—विशेष करिके गूगलके वृक्ष मरुदेशमें होते हैं सो निरंतर सूर्यकी किरणोंसे ग्रीष्मऋतुमें गूगलको त्यागते हैं ॥ ३ ॥ और हिमाद्रिपर्वतमें गूगलवृक्षोंसे हेमंतऋतुमें गूगल निकसता है कहीक तो चांदीकेसमान सफेद होता है कहीं पद्मरागकेसमान होता है ॥ ४ ॥ कहींक भैंसाके नेत्रोंकेसमान वर्णवाला होता है वह यक्षदेवता इन्होंको प्रिय है सो तिसका विधान विधिसे कहतेहुए मुझसे सुन ॥ ५ ॥ यह त्रिदोषको शांत करनेवाला है वीर्यमें हित है स्निग्ध है धातुवोंको वढानेवाला है अग्निको दीप्त करनेवाला है और गूगल पाकमें चर्परा है वर्ण, वल इन्होंको वढानेवाला है ॥ ६ ॥ आयुमें हित है लक्ष्मी वढानेवाला है पुत्र, स्मृति, मेधा इन्होंको वढानेवाला है पापको शांत करनेवाला है श्रेष्ठ है वीर्य स्त्रीके आर्तव इन्होंको करनेवाला है॥७॥और वर्ण, गंध, रस इन्होंसे संयुक्त गूगलमात्रसे युक्त कियाहुआ और औषधोंकेसंग क्काथ वनाके दियाहुआ व्याधिके अनुसार दियाहुआ सव व्याधियोंको नाशता है ॥ ८ ॥ मात्राके अनुसार तिस गूगलको देखके सफेद वस्त्रमांहके छान लेवे पीछे मट्टीके पात्रमें अथवा सुवर्णके पात्रमें तथा चांदीके पात्रमें तथा कांचके पात्रमें ॥ ९ ॥ शुभ तिथिमें और शुभ नक्षत्रमें घाल धरे पीछे भोजन जर जावे तव क्षमासे युक्तहुआ पुरुष सुंदर पुष्पोंसे आकीर्णहुआ मंदिरमें जाके देवता ब्राह्मण इन्होंकी भक्ति और उपासना कर ॥ १० ॥ तिस गूगलको स्थापित करदेवे और वातसे उपजे रोगमें खायेहुए गूगलके ऊपर रास्ना, गिलोय, अरंड, दशमूल, सोंफ ॥ ११ ॥ अजमान इन्होंका क्काथको यथायोग्य पीवे और पित्तरोगसे पीडितहुआ पुरुष पृथक् २ जीवनीयगुणकी औषधोंमें पकायाहुआ क्काथको पीवे ॥ १२ ॥ और वांसा, चंदन, नेत्रवाला, मुनका, दाख, कुटकी, खिजूर, फालसा जीवक, ऋषभक इन्होंका क्काथ गूगलमें युक्तकर पित्तके रोगोंमें पीना हित है ॥ १३ ॥ त्रिफला, सूंठ, मिरच, पीपली, गोमूत्र, नींव, धनियां पोहकरमूल, गिलोय, अजम

इन्होंके क्काथकेसंग गूगल लेना कफके रोगोंमें हित है ॥ १४ ॥ दुष्टनाडीव्रण, ग्रंथिरोग, गंडमाला, अर्बुद प्रमेह, व्रण, इन रोगोंवाला पुरुष त्रिफलाके क्काथकेसंग पीवै ॥ १५ ॥ और चिरायता गिलोय, नींव, वांसा, कटेहली, धमांसा, इन्होंके क्काथकेसंग गूगलको पीवै॥१६॥ तो गुल्म, खांसी, चोट, श्वास, विद्रधि, अरुचि, व्रण, इन्होंका नाशहोता है, और दारुहल्दी, परवल इन्होंके क्काथकेसंग गूगलको पीवे ॥ १७ ॥ तो खाजी, पिंडिका, शोजाआदिक वात, कफ इन्होंका नाश होता है और हरडे, सांठी, दारुहल्दी, गोमूत्र, दूध ॥१८॥ इन्होंके क्काथके संग गूगल पीनेसे पांडुरोग, शोजा, उदररोग, किलासकुष्ठ इन्हों-का नाश होता है और एक तोलासे लेके चार तोला प्रमाणतक गूगलका खाना हित है॥१९॥ और जब खायाहुआ गूगल जर जावे तब मूंगोंका यूष और जांगलदेशके जीवोंका रसकेसंग भोजन करना हित है और दूधके संग सांठी चावल और शालीसंज्ञक चावलोंको खावै॥२०॥ सात दिनतक गूगलका सेवन करना प्रथम मात्रा है, और १४ दिनतक मध्यम मात्रा, और इक्कीस दिनतक सेवन करनेको परममात्रा कहते है ऐसे योग युक्तिको जाननेवालोंने कहा है ॥ २१ ॥ और जो पुरुष क्रमसे वर्ष दिनतक गूगलको सेवता है तिसको स्थावर और जंगमविषोंकी मात्रा दुःख नहीं देती है ॥ २२ ॥ और जिसकी त्वचामें गुगल ऊठ गिर पडे वाल सफेद होजा ऐसा वृद्ध पुरुषभी इसके खानेसे जवान होजाता है और बुद्धि, दृष्टी, वल, वीर्य इन्होंकी वृद्धि होती है वृद्धपनेके दुःखोंसे दूर होजाता है और गुल्म, अष्ठीला, हृदाका रोग, आमवात इन्होंको शांत करता है कुष्ठ, प्रमेह, पथरी, शूल, अफारा, विसर्प, रक्तदोष, भूतव्याधि इन्होंको शांत करता है ॥ २३ ॥ इति वेरीनिवासिवुधशिवसहायसूनुवैद्यरविदत्त-शास्त्र्यनुवादितहारीतसंहिताभाषायां कल्कस्थाने गुग्गुलकल्कोनाम पंचमोऽध्यायः ॥ ५ ॥

## इति कल्कस्थानं समाप्तम् ॥

# अथ शारीरस्थानम् ॥

## प्रथमोऽध्यायः ॥ १ ॥

### अथ शारीराध्यायः ॥

आत्रेय उवाच ॥ पञ्चभूतात्मकं देहं पञ्चेन्द्रियसमायुतम् ॥ सप्तधातुगुणोपेतं दशवातात्मिकं विदुः ॥ १ ॥ जीवो मनस्तथाकाशस्तथैव त्रिगुणात्मिकः ॥ शुक्रशोणितसम्भूतं शरीरं दोषभाजनम् ॥ पञ्चभूतमयं चैतद्धि ज्ञेयं भिषजां वर ! ॥ २ ॥ चतुर्विधं शरीरं स्याद्बाल्यं प्रौढं प्रगल्भकम् ॥ स्थविरञ्च तथा प्रोक्तं बाल्यमल्पशरीरकम् ॥ षोडशवार्षिकं यावद्बाल्यं तावत् प्रवर्त्तते ॥ ३ ॥ धातूनाञ्च बलं तत्र धातुमूलं शरीरकम् ॥ धातूनां पुष्टियोगेन शरीरञ्चातिवर्द्धते ॥ ४ ॥ जीवितं धातुमूलं तु मृत्युर्धातुक्षयादपि ॥ हीनधातोश्च योगेन लभते स्वल्पजीवनम् ॥ ५ ॥ नरो धातुबलेनापि जीवितश्चात्र दृश्यते ॥ तस्माच्च मैथुनात्सम्यग्जायते गर्भसम्भवः ॥ ६ ॥ आदौ धातुबलं तस्मात्सत्वं तस्माद्रजो विदुः ॥ रजसा जायते कामः कामात्सुरतसङ्गमः ॥ ७ ॥ मासे मासे ऋतुः स्त्रीणां दृष्वा ऋतुमतीस्त्रियः ॥ रजः सप्तदिनं यावदृतुश्च भिषजां वर ! ॥ ८ ॥ सप्तरात्राद्योनिशुद्धिस्तस्मादृतुमती भवेत् ॥ दृश्यते च रजः स्त्रीणां विना योगेन पुत्रक ! ॥ ९ ॥ दृश्यते न विना योगात्फलं स्त्रीणां तु पुत्रक ! ॥ संशयाद्विस्मितश्चित्ते हारीतः परिपृच्छति ॥ १० ॥

आत्रेयजी कहते हैं—पांच तत्वोंसे उत्पन्न होनेवाला पांच इंद्रिय और सात धातु तथा दश वायुवोंसे युक्त ऐसा देहको कहते है ॥ १ ॥ और जीव, मन, आकाश ऐसे त्रिगुणात्मक शरीर है वीर्य और शोणितसे उपजेहुए शरीरको दोषका पात्र कहते है हे उत्तमवैद्य ! पांच तत्वोंसे उत्पन्न होनेवाला शरीर जान॥२॥चार प्रकारका शरीर होता है बालक १, जवान २, प्रगल्भ ३, वृद्ध ४, ऐसे चार प्रकारका कहा है तहां बालक अल्प शरीर कहा है और जब तक सोलह वर्षका हो तबतक बालक अवस्था रहती है ॥ ३ ॥ तहां शरीरमें धातुवोंका बल

होता है और धातुवोंकी जडवाला शरीर कहा है और धातुवोंकी पुष्टीके योगसे शरीर अ-त्यंत बढता है ॥ ४ ॥ जीवना धातुवोंकी जडसे है और धातुक्षय होंनेसे मृत्यु होजाती है और हीन धातुके योगसे थोडा जीवना होता है ॥ ५ ॥ मनुष्यका जीवना धातुकेही बलसे दीखता है इसवास्ते मैथुनसे सम्यक् प्रकारसे गर्भ स्थित होता है ॥ ६ ॥ पहले धातुका बल तिससे सत्वगुण, सत्वगुणसे रजोगुण, तिस्से काम, कामसे मैथुनका संगम होता है ॥ ७ ॥ महीना २ केप्रति ऋतु अर्थात् स्त्री रजस्वला धर्ममें होती है हे उत्तमवैद्य ! सात दिनतक स्त्रि-योंकै रज रहता है तबतक ऋतुसमय कहाती है ॥ ८ ॥ और सात रात्री पीछे योनिकी शुद्धि होजाती है तब वह ऋतुमती कहाती है हे पुत्र ! स्त्रियोंकै रज विनाही योगसे होता है ॥ ९ ॥ और फल अर्थात् गर्भस्थितिसंयोगकी विना नहीं होती है ऐसे सुनके संदेहमें युक्त-हो हारीत फिर पूछता भया ॥ १० ॥

हारीत उवाच ॥ संयोगेन विना प्राज्ञ ! कथं गर्भो न जायते ॥ संयोगेन विना पुष्पं फलं वा न कथं भवेत् ॥ ११ ॥ वृक्षवन्न कथं स्त्रीणां फलोत्पत्तिः प्रदृश्यते॥ एतत्पृष्टो महाचार्य्यः प्रोवाच ऋषिपुङ्गवः ॥ १२ ॥

हारीत पूछने लगा—हे महाराज ! संयोगके विना स्त्रियोंकै गर्भ क्यों नहीं ठहरता है क्यौं-कि संयोगके विना पुष्प तो होगये फिर फलभी क्यौं नहीं होता है ? ॥ ११ ॥ वृक्षकी तरह स्त्रियोंकैभी गर्भकी उत्पत्ति क्यों नहीं होती ऐसे पूछाहुआ ऋषियोंमें उत्तम महान् आचार्य फिर बोलता भया ॥ १२ ॥

आत्रेय उवाच ॥ विरुद्धानाञ्च वल्लीनां स्थावराणाञ्च पुत्रक ! ॥ तत्र धातुसमं वीजं सह योगेन वर्त्तते॥ १३ ॥न भिन्नदृष्टिस्तस्यैव दृश्यते शृणु पुत्रक ! ॥ स्थावराणाञ्च सर्वेषां शिवशक्तिमयं विदुः ॥ १४ ॥ निश्चलोऽपि शिवो ज्ञेयो व्याप्तिशक्तिर्महामते ! ॥ तत्र स्त्रीपुरुषगुणा वर्त्तन्ते समयोगतः ॥ १५ ॥ आम्रपुष्पं फलं तद्वद्वीजं शुक्रमयं विदुः ॥ स्त्रीणां रजोमयं रेतो वीजाढ्यमिन्द्रियं नरे ॥ तस्मात्संयोगतः पुत्र ! जायते गर्भसम्भवः ॥ १६ ॥ प्रथमेऽहनि रेतश्च संयोगात्कललं च यत् ॥ जायते वुद्बुदाकारं शोणितञ्च दशाहनि ॥ १७ ॥ घनं पञ्चदशाहे स्याद्विंशाशाहे मांसपिण्डकम् ॥ पञ्चविंशतमे प्राप्ते पञ्चभूतात्मसम्भवः ॥ १८ ॥-

मासैकेन च पिण्डस्य पञ्चतत्त्वं प्रजायते ॥ पञ्चाशद्दिने संप्राप्ते अङ्कुराणा
श्च सम्भवः ॥ १९ ॥ मासत्रये तु संप्राप्ते हस्तपादौ प्रवर्धते ॥ सार्द्धमा
सत्रये प्राप्ते शिरश्च सारवद्भवेत् ॥ २० ॥ चतुर्थके च लोमानां सम्भ
वश्चात्र दृश्यते ॥ पञ्चमे च सुजीवः स्यात्षष्ठे प्रस्फुरणं भवेत् ॥ २१ ॥
अष्टमे मासि जाते च अग्नियोगः प्रवर्त्तते ॥ मासे तु नवमे प्राप्ते जाय
ते तस्य चेष्टितम् ॥ २२ ॥ जायते तस्य वैराग्यं गर्भवासस्य कारणात् ॥
दशमे च प्रसूयेत तथैकादशमेऽपिवा ॥ २३ ॥ अथ दोषवलेनापि गर्भो
वापि प्रसूयते ॥ वातसंप्रेरिते गर्भे अपूर्णे दिवसैर्यदि ॥ २४ ॥ प्रसूयते
वाप्यथ तद्गर्भे बालः प्रदृश्यते ॥ अथ वक्ष्यामि देहस्य वर्णज्ञानं महा
मते ! ॥ २५ ॥ नररेतोऽधिकत्वेन तथा शुक्राधिकेन तु ॥ हीनरसेन्द्रिये
र्वापि जायते पुरुषाधिकः ॥ २६ ॥ स्त्रीरेतसोधिकत्वेन हीनशुक्रेन्द्रिया
दपि ॥ रजसोप्यधिकत्वेन स्त्रीसम्भूतिः प्रजायते ॥२७॥ सप्तधातुबलेना
पि प्रकृत्या विकृतेः समे ॥ ऋतुव्याप्तरजःस्त्रीणां या या भवति भावना
॥ २८ ॥ सात्विकी राजसी वापि तामसी वापि सत्तम ! ॥ तादृशं जन
येद्बालं गुणैर्वा तादृशैरपि ॥ ५९ ॥ या च भावयते चित्ते भ्रातरं पि
तरं नरम् ॥ येन वा तेन सदृशं सूयते सा भिषग्वर ! ॥ ३० ॥ वातेन श्या
मः पुरुषो वातप्रकृतिसम्भवः ॥ पित्तेन गौरो भवति पित्तप्रकृतिवान्भवेत्
॥ ३१ ॥ श्लेष्मणा जायते स्निग्धः श्यामश्च लोमशस्तथा ॥ दीर्घशिरो
रुहः स्थूलो दीर्घप्रकृतिसंयुतः ॥ ३२ ॥ वातरक्तेन कृष्णोऽपि पित्तरक्ते
न पिङ्गलः ॥ पित्तवांश्च नरो रूक्षः स्निग्धः श्यामः कफासृजा ॥ ३३ ॥
भृङ्गराजाञ्जनाकारं वातेन दृष्टिमण्डलम् ॥ सूक्ष्मलोमा च कृष्णश्च रू
क्षमूर्द्धजयान्वितः ॥ यस्य वातेन तं विद्धि नखसूक्ष्मासितच्छविम्॥३४॥
पित्तेन पीतश्च भवेदलोमा पिङ्गेक्षणाभासपिशङ्गकेशः ॥ आलोमशः
पीतनखप्रभः स्यात्क्षुधातुरो निरूष्मणा स दृप्तः ॥ ३५ ॥ स लोमशो दृ
प्तकठोरकेशः श्यामच्छविर्दृप्ततनुर्विशालः ॥ सुस्निग्धदन्तः सितनेत्ररम्यो
नखच्छविःपाण्डुसुदीर्घनासः ॥ ३६ ॥

आत्रेयजी कहते हैं–हे पुत्र! विरुद्ध जो स्थावर वृक्ष वेल आदिक है तिन्होंको तो धातुके संग बीज योगसहित प्रवृत्त होता है ॥ १३ ॥ हे पुत्र! तिन्होंके भिन्न दृष्टी नहीं है सो सुन संपूर्ण स्थावर वृक्ष आदिकोंके शिव और शक्तिको जान ॥ १४ ॥ तहां निश्चल तो शिव है और शक्ति व्याप्तहो रही है तहां स्त्री पुरुषके गुणसंगही प्रवृत्त होते है ॥ १५ ॥ इसवास्ते आंवके पुष्प और फल संगमें ही प्रवृत्त होता है, और बीजको वीर्यकी जगह जान और स्त्रियोंके रजही वीर्य है, और पुरुषके वीर्य बीजरूप है हे पुत्र! इसवास्ते संयोगसेही गर्भकी उत्पत्ति होती हैं ॥ १६ ॥ और पहले दिन वीर्यके संयोगसे बुलबुलाके आकार वीर्य स्थित होता है दशदिनमें रुधिर होजाता है ॥ १७ ॥ पंद्रहदिनमें करडा होजाता है और बीसमें दिनमें मांसकी पिंडी होती है २५ दिनमें पांच तत्वोंका संभव होता है ॥ १८ ॥ एक महीना तिसके पांचों तत्व प्रकट होजाते हैं पंचाशदिनोंमें अंकुरोंकी उत्पत्ति होजाती है ॥ १९ ॥ तीन महीनें होजावे तब हाथ पैर बढनें लगजाते है साढेतीन महीनेंमें शिर प्रकट होजाता है ॥ २० ॥ चौथा महीनामें रोम होते है और पांचवां महीनामें जीव प्रकट होजाता है छठा महीनामें फुरनें लगजाता है ॥ २१ ॥ पीछे आठमें महीनेंमें तिसकै जठराग्निका योग होजाता है नवमा महीनामें तिसको चेष्टा होती है ॥ २२ ॥ पीछे तिसको गर्भवासके कारणसे वैराग्य होता है अर्थात् संसारसे दूर होनेंका ज्ञान होता है फिर दशवे महीनेंमें उत्पन्न होता है ॥ २३ ॥ और वातआदिक दोषोंके बलसे गर्भ जनता है जो दशवां महीनातक दिन पूरे नहीं हुएहो ॥ २४ ॥ तो वह वातदोषसे प्रेरितहुआ गर्भ पहलेभी उत्पन्न होजाता है हे महामते! अब देहके वर्ण ज्ञानको कहते है ॥ २५ ॥ मनुष्यका वीर्य शुक्र अधिक होवे तो पुरुष जन्मै ॥ २६ ॥ और स्त्रीका वीर्य रज अधिक होवे और शुक्र हीन होवे तो कन्या जन्मै ॥ २७ ॥ और सात धातुवोंके बलसे प्रकृती और विकृति जब समान होजावे और रजस्वला होनेंके स्त्रीके ऋतुसमयमें स्त्रियोंकी जैसी २ भावना हो ॥ २८ ॥ सत्वगुणी अथवा रजोगुणी तथा तामसी जैसी प्रकृतिहो तैसेही गुणोंसे युक्त तैसेही बालकको स्त्री जनती है ॥ २९ ॥ और जो स्त्री तिस समयमें चित्तमें भ्राता अथवा पिता अथवा अन्यपुरुष जिसका स्मरण करती है हे उत्तमवैद्य! तिसीके सदृश पुत्रको जनती है ॥ ३० ॥ और वात दोषसे श्यामवर्णवाला पुरुष होता है और वातकी प्रकृतिवाला होता है पित्तसे गौर वर्णवाला और पित्तकी प्रकृतिवाला होता है ॥ ३१ ॥ कफसे चिकना और श्यामवर्णवाला तथा रोगोंवाला होता है और बडे बालहों, स्थूलहो दीर्घ प्रकृतिसे युक्त होता है ॥ ३२ ॥ वात रक्तसे काला वर्णवाला और पित्तरक्तसे पिंगल वर्णवाला होता है और पित्तवाला मनुष्य रूपा होता है और कफरक्तसे स्निग्ध और कालेवर्णवाला होता है ॥ ३३ ॥ और वात दोषसे भौंरा तथा अंजनके आकारवाले दृष्टिमंडल होते है और जिसकै सूक्ष्म रोमहों काले

और रूखे बालहों और जिसके सूक्ष्म २ लाल नखहो उसकी वातकी प्रकृति जाननी ॥३४॥ पित्तसे पीले रोम होते है और पीले नेत्र तथा वांदरसरीखे केश होते है और रोम नख ये पीले होते है और क्षुधासे युक्त रहता है मुखसे भांफनिकसती रहती है और बहुतसे रोम होते है गर्वीले ॥ ३५ ॥ तथा कठोर वाल होते है श्याम कांति हो और गर्विला तथा सुंदर शरीर होताहै चिकनें दांतहो सुंदर रमणीक सफेद नेत्र रहते है नख पीले रहते है और दीर्घ नासिका होती है ॥ ३६ ॥

अथ नपुंसक तथा अपत्ययुग्मका विचार॥

समवीर्य्यरजस्त्वेन नरः स्त्रीप्रकृतिर्भवेत् ॥ नपुंसकमिति ख्यातं न स्त्री न पुरुषो वदेत् ॥ ३७ ॥ दोषधातुविशेषेण सङ्गे सत्यङ्गसंभवः ॥ कृत भ्रान्ते च संभोगे द्वाभ्याञ्च द्रवते मनः ॥ ३८ ॥ दृश्यते यमलोत्पत्तिर न्यचित्तप्रियङ्करी ॥ ३९ ॥

और मैथुन करनेंके समय पुरुषका वीर्य और स्त्रीका रज जो समान होवे तो नपुंसक जन्मता है वह न तो पुरुष नहीं स्त्री होता है ॥३७ ॥ और दोष धातु इन्होंका विशेष करिकै रांग होनेंसे जो अंगका संभव होता है और भ्रांत चित्त होके जो भोग करते है तहां दोष और धातु दोनुवोंसे मन द्रवता है ॥ ३८ ॥ तहां यमल अर्थात् जोहेले बालक उत्पन्न होते हैं वे अन्योंके चित्तको प्रसन्न करनेंवाले है ॥ ३९ ॥

अथ नपुंसकका विचार ॥

समदोषबलेनापि प्रकृत्या विकृतेरपि॥ शुक्रासृक्च भवेच्छ्यामा नपुंसक समुद्भवा ॥४०॥ अथ बीजलेहिपञ्चभूताग्निना परिपक्वं कललं क्रियते॥ सोऽपि चान्तःस्थो वायुर्बुद्बुदाकारो बाह्यवातेन संभृतो भवति ॥ स च कललं भूत्वा पञ्चभूताग्निना पिण्डं जनयति ॥ तच्च पिण्डं परिपाकं गतं घनसंघातश्च जातं व्यानवातेन पञ्चतत्त्वानि हस्तपादादीञ्छिरोऽवयवा न्संजनयति ॥ अन्तःस्थो वायुरेकोऽपि नानास्थानं समाश्रित्य देहाकारं करोति ॥ उदानो गलहृदयसंस्थितो देहमुखद्वारं प्रकाशयति ॥ अपान वायुरधःस्थोऽपानद्वारं विशोधयति ॥ एते चान्तःस्थाः पृथक्पृथक् मार्गे छिद्रं कृत्वा निर्गच्छन्ति ॥ तान्ये व नवद्वाराणि मुखघ्राणकर्णनेत्रापान मेहनानि चैतानि द्वाराणि वातेन प्रभवन्ति ॥ तत्रान्तःस्थो वायुः प्र

तानत्वेन हस्तपादाद्यानवयवान्संजनयति ॥ ४१ ॥ त्वङ्मांसकेशरोमास्थिभूभागं जनयेत्तथा ॥ रसं रक्तञ्च लालाञ्च मूत्रं शुक्रं जलानि च ॥ ४२ ॥ अग्निं पित्तञ्चनेत्रञ्च तमः क्रोधादिपञ्चकम् ॥ श्रुतिः स्पर्शस्तथोच्छ्वासः स्वेदश्चंक्रमणादि च ॥ ४३ ॥ वाता ह्येते परिज्ञेया अन्या प्रकृतिरेव च ॥ मनो बुद्धिस्तथा निद्रा आलस्यं मद एव च ॥ ४४ ॥ शून्यात्पञ्च प्रजायन्ते देहे देहे व्यवस्थिताः ॥ वातरक्तेन त्वग्देहे मांस त्वगाश्रितं मतम् ॥ ४५ ॥ शुक्रश्लेष्मोद्भवो मेदो रसोऽस्थिरक्तसंभवः ॥ पित्ताश्रितं हृदयस्थं वातरक्तमयं यकृत् ॥ ४६ ॥ रक्तश्लेष्मरसाश्रित उरुः कफरक्तश्लेष्ममयः ॥ प्लीहा कफरक्तमय्यः पेशयश्च ॥ ४७ ॥ पञ्चभूतमयं देहमाकाशं शून्यमेव च ॥ शून्याद्वायुः समुत्पन्नो वायोः प्राणः प्रजायते ॥ प्राणांशश्च तथा जातः सर्वसत्वे प्रतिष्ठितः ॥ ४८ ॥

और दोष धातु इन्होंके समान होनेसे तथा प्रकृति और विकृतिकेसमान होनेसे वीर्य और रजसे संयुक्त स्त्री जन्मती है अर्थात् हीजडी होती है ॥ ४० ॥ और मैथुन समयमें योनिमें प्राप्तहुए वीर्यको पंच तत्वोंकी अग्नि पकाके कलल कर देती है पीछे उदरमें स्थितहुआ वह कलल बाहिरकी वायुसे बुलबुलेके आकार होजाता है फिर वह कललहोके पांच तत्वोंकी अग्निसे पिंड होजाता है पीछे पकाहुआ वह पिंड करडा इकट्ठा होजावे तब उदानवायु पांच तत्व हाथ पैरआदिक–शिरआदि अंग इन्होंको उत्पन्न कर देता है और अंतर हृदामें स्थितहुआ एकही वायु अनेक स्थानोंके आश्रय होके तिस पिंडको देहके आकार कर देता है उदानवायु तो गल हृदा इन्होंमें स्थित होके देहमें मुखके द्वारको प्रकाशित कर देता है और अपानवायु नींचाको स्थितहो गुदाके द्वारको शोध देता है ये सब भीतर रहनेवाले वायु पृथक् पृथक् मार्गमें छिद्रकरके निकसते है वे ही नव द्वारोंको करते हैं मुख, नासिका, कर्ण, नेत्र, गुदा, लिंग ऐसे ये ९ द्वार वायुसे होते है तहां भीतर रहनेवाला वायु विस्तृतहोके हाथ पैरआदिक अंगोंको उत्पन्न कर देता है ॥ ४१ ॥ और त्वचा, मांस केश, रोम, अस्थि ये पृथ्वी तत्वसे उत्पन्न होते है रस, रक्त, राल, मूत्र, वीर्य ये जलतत्वसे उत्पन्न होते है ॥ ४२ ॥ और पित्त, नेत्र, अंधेरा, क्रोध, मोहआदिक पांच ये अग्निसे होते है कान, स्पर्श ऊंचा श्वास, पसीना, चहलकदमी आदि करना ॥ ४३ ॥ ये वातसे उत्पन्न होते है और मन, बुद्धि, निद्रा, आलस्य, मद ॥ ४४ ॥ ये पांच आकाश तत्वसे होते हैं ऐसे सब शरीरोंमें व्यवस्था है और वातरक्तसे शरीरमें त्वचा होती है ॥ ४५ ॥ और मांस त्वचाके आश्रय कहा है

और वीर्य तथा कफसे मेद उत्पन्न होता है और अस्थि रक्त इन्होंसे रस होता है और हृदामें पित्तका आश्रय है और वातरक्तसे युक्त यकृत् स्थान है ॥ ४६ ॥ और रक्त, कफ, रस इन्हों के आश्रय जांघ है और कफरक्त इन्होंके आश्रय तिल्लीस्थान है और कफरक्तके आश्रय मांसकी पेशी है ॥ ४७ ॥ यह पंच तत्वोंका शरीर है तहां आकाश शून्य है शून्यसे वायु उत्पन्न होता है वायुसे प्राण होते है फिर प्राणोंके अंशसे संपूर्ण जीवोंमें होनेवाला सत्वगुण होता है ॥ ४८ ॥

आकाशाज्जलमुत्पन्नं जलाज्जाता वसुन्धरा ॥ तस्यास्तेजस्तथा जातं तेजसो जायते तमः ॥ ४९ ॥ पञ्चभूतात्मके देहे पञ्चेन्द्रियसमायुते ॥ भूतानाञ्च प्रधानो य आकाशमिति शब्दितः ॥ ५० ॥ आकाशात्तेजस्तेजसो दर्पो दर्पात्पराक्रमस्तस्मादहङ्कारस्ततः कोपः कोपात्तमस्तमसः पापमिति ॥ आकाशात्सत्वं सत्वात्सत्यं सत्यात्तपस्तपसो नयो नयाद्विवेको विवेकाच्छान्तिः शान्त्या धर्म इति ॥ सत्याद्रजो रजसः कामः कामाल्लौल्यं लौल्यादसत्यमसत्यात्पापमिति ॥ रसात्कामः कामादभिलाषोऽभिलाषात्प्रजा प्रजाया मैत्री मैत्र्याः स्नेहः स्नेहान्मोहो मोहान्माया ततो भ्रान्तिर्भ्रान्त्या मिथ्या ततोऽविद्या अविद्यायाः पुण्यपापानि पुण्यपापेभ्यः सम्भव इति ॥ ५१ ॥ सत्वाच्च तम एव स्याज्जायते स्वपते प्रभुः ॥ तमसा प्रवृतो देही व्योमेन शून्यतां गतः ॥ ५२ ॥ देहं विश्रमते यस्मात्तस्मान्निद्रा प्रकीर्त्तिता ॥ नासार्द्धे च भ्रुवोर्मध्ये लीयते चान्तरात्मना ॥ ५३ ॥ तस्माच्चेतो भवेत्तत्र निद्रा व्यालीयते नृणाम् ॥ ५४ ॥ सत्वात्तेजः समाख्यातं तेजसा पित्तमेव च ॥ जायते वायुर्मनसः स्वपते तमसावृतः ॥ ५५ ॥ वायोस्तमःसमायोगात्स्वभावस्थेति गीयते ॥ सत्वं तमस्तथा वायुर्वर्त्तते चैकयोगतः ॥ ५६ ॥ आहरनिद्रा च क्षुधा च तृष्णा भयश्च मात्सर्य्यमदश्च मोहः ॥ क्रोधाभिलाषः सुखतृप्तिशान्तिर्भवन्ति वै देहभृतां शृणु त्वम् ॥ ५७ ॥ आहारस्येच्छया देहे विचरते हुताशनः ॥ तृप्तिं वापि समाप्नोति रसस्वादरजस्य च ॥ ५८ ॥ यदा यदा शोषयते मलानामग्निस्तदा तृप्तिमिवातनोति ॥ यदा च यस्यैव भक्ष्ये-

व तृष्णां प्रतनोति चेतः ॥ ५९ ॥ इत्यात्रेयभाषिते हारीतोत्तरे शारीर स्थाने शारीराध्यायो नाम प्रथमोऽध्यायः॥ १॥इति शारीरस्थानं समाप्तम्॥

और आकाशसे जलतत्व होता है तिससे पृथ्वी होती है तिससे अग्नितत्व होता है अग्नि से तमोगुण होता है ॥ ४९ ॥ और पंचभूतात्मक तथा पांच इंद्रियोंसे युक्त ऐसे शरीरमें जो तत्वोंमें प्रधान है वह आकाश कहाता है ॥ ५० ॥ आकाशसे अग्नि होता है अग्निसे अभिमान होताहै तिस्से पराक्रम होता है तिस्से अहंकार अहंकारसे क्रोध होता है तिस्से तमोगुण और तमोगुणसे पाप होता है और आकाशसे सत्वगुण तिसे सत्य सत्यसे तप नीति नीतिसे विवेक विवेकसे शांति शांतिसे धर्म होता है और सत्यसे रजोगुण होता है रजोगुणसे कामना कामनासे चंचलपना होता है चंचलपनेंसे असत्य और असत्यसे पाप होता है और रससे कामना कामसे अभिलाषा अभिलाषासे प्रजा अर्थात् संतान और प्रजा से मित्रभाव होता है तिस्से स्नेह स्नेहसे माया होती है तिस्से भ्रांति भ्रांतिसे मिथ्या तिस्से अविद्या और अविद्यासे पुण्य तथा पाप दोनों होते है फिर पुण्यपापोंसे जन्म होता है॥५१॥ सत्वगुणसे तमोगुण होता है वह जाग्रत् अवस्था तथा स्वप्न अवस्थामें बलवंत हैं और तमोगुणसे प्रवृत्त हुआ जीव आकाशके संग शून्यभावको प्राप्त होता है ॥ ५२ ॥ तब देहको विश्रामदेता है तिसको निद्रा कहते है नासिकाका अर्द्धभाग और भ्रुकुटि मध्य तहां अंतरात्मके संगलीन होता है ॥ ५३ ॥ तहां चित्त रहता है तिस्से मनुष्योंकी निद्रा दूर होती है ॥ ॥ ५४ ॥ और सत्वगुणसे तेज तेजसे पित्त होता है और मनसे वायु उत्पन्न होता है और तमोगुणसे युक्त हुआ जीव सोवता है ॥ ५५ ॥ और तमोगुणके योगसे जो वायु होता है वह स्वप्नअवस्था कहाती है और सत्वगुण तमोगुण, वायु ये तीनों स्वप्नअवस्थामें एक योगसे वर्त्तते है ॥ ५६ ॥ और आहार, निद्रा, क्षुधा, तृषा, भय, मत्सरपना, मद, मोह, क्रोध, अभिलाष, सुखकी तृप्ती, शांति ये सब देहधारियोंके होते है ऐसे तू सुन ॥ ॥ ५७ ॥ और देहमें विचरताहुआ अग्नि भोजनकी इच्छा कर देता है ॥५८॥ और जठराग्नि जब २ मलोंको शोषती है तब तिसकी तृप्ति रहती है और जब तिसकी तृप्ति नहीं होती है तब वह तृषाको उपजा देती है ॥ ५९ ॥ इति बेरीनिवासिबुधशिवसहायसूनुवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहिताभाषायां शारीरस्थाने षष्ठेशरीराध्यायोनाम प्रथमोऽध्यायः ॥ १ ॥

# अथ परिशिष्टाध्यायः ॥

इति प्रोक्तः शरीरार्थस्तद्व्यासेनोपदिश्यते ॥ श्रुत्वा चैनं महातेजा हारीतो मुनिसत्तमः ॥ १ ॥ प्रणिपत्य गुरुश्रेष्ठं हृष्टान्तःकरणस्ततः ॥ जगाम स्वर्णदीतीरं स्नानध्यानरतस्तथा ॥ २ ॥ य एतत् पठति शास्त्रं महर्षेर्वचनाच्छ्रुतम् ॥ सर्वपापविनिर्मुक्तो नीरुजः सुखमश्नुते ॥ ३ ॥ आदौ यद् ब्रह्मणा प्रोक्तमत्रिणा तदनन्तरम् ॥ धन्वन्तरिणा प्रोक्तश्च अश्विना च महात्मना ॥ ४ ॥ एवं वेदसमं ज्ञेयं नावज्ञाकारणं मतम् ॥ अन्यैश्च बहुधा प्रोक्तं नानाशास्त्रविशारदैः ॥ ५ ॥ अमीषां च मतं ग्राह्यं तस्मात् सर्वं समं विदुः ॥ चरकः शुश्रुतश्चैव वाग्भटश्च तथापरः ॥ ६ ॥ मुख्याश्च संहिता वाच्यास्तिस्र एव युगे युगे ॥ ७ ॥ अत्रिः कृतयुगे वैद्यो द्वापरे शुश्रुतो मतः ॥ कलौ वाग्भटनामा च गरिमात्र प्रदृश्यते ॥ ८ ॥ वैष्णवी चाश्विनी गार्गी तत्र माध्यान्हिकापरा ॥ मार्कण्डेया च कथिता योगराजेन धीमता॥९॥ संहिता ऋषिभिः प्रोक्ता मन्त्रैर्नानाविधैर्विभो ! ॥१०॥ अग्निवेशश्च भेडश्च जातूकर्ण्यः पराशरः ॥ हारीतः क्षारपाणिश्च षडेते ऋषयस्तु ते ॥ ११ ॥ यथा सिंहो मृगेन्द्राणां यथानन्तो भुजङ्गमे ॥ देवानाञ्च यथा शम्भुस्तथात्रेयोऽस्ति वैद्यके ॥ १२ ॥ तस्माद्यत्नेन सद्वैद्यैः सादरार्द्रसुमानसैः ॥ अर्चनीयोऽनुमन्तव्यो दास्यति सुखसम्पदः॥१३॥ इत्यात्रेयभाषिते हारीतोत्तरे परिशिष्टाध्यायः ॥ १ ॥ इति हारीतसंहिता समाप्ता ॥

इस प्रकारसे आत्रेयजीनें शरीरकी चिकित्सा विस्तारसे कह दी तब महान् तेजवाला उत्तम हारीत मुनि सुनके ॥ १ ॥ तिस श्रेष्ठ गुरुको प्रमाणकर अंतःकरणमें प्रसन्नहो देवताओंकी नदीके तीरपे जा तहां स्नान ध्यानमें रत होता भया ॥ २॥ महर्षिके वचनोंसे कहाहुआ इस शास्त्रको जो सुनता है वह सब पापोंसे छुटके सुखको प्राप्त होता है ॥ ३ ॥ पहले यह शास्त्र ब्रह्माजीनें कहा है पीछे अत्रिमुनिनें फिर धन्वंतरिनें कहा है और अश्विनीकुमारोंनें कहा है ॥ ४ ॥ ऐसे वेदमें युक्तहुआ यह शास्त्र चला आता है निंदित करनेंके योग्य है और अनेक शास्त्रोंको जाननेवाले अन्य बहुतसे ऋषियोंनें अनेकप्रकारसे

और इन आगे कहेहुए ऋषियोंका मत है इसवास्ते सबको माननेंदायक है चरक, सुश्रुत वाग्भट इत्यादिक ॥ ६ ॥ मुख्य ऋषियोंसे यह संहिता युग२में कहीं हुई है ॥ ७ ॥ अत्रिमुनि सतयुगमें वैद्य होते भये द्वापरमें सुश्रुत होते भये और कलियुगमें वाग्भटनामवाला महान. वैद्य दीखता है ॥ ८ ॥ और वैष्णवी, आश्विनी, गार्गी, माध्यान्हिका. मार्कंडया, ये संहिता योगराजनें कही है॥९॥ और आयुर्वेद संहिता ऋषियोंनें अनेक प्रकारके मंत्र और औषधोंसे युक्त कर दी है ॥ १० ॥ और अग्निवेश, भेड, जातूकर्ण्य, पराशर, हारीत, क्षारपाणि, ये छह ऋषि कहे है ॥ ११ ॥ और जैसे मृगोंमें सिंह है और सर्पोंमें शेषनाग है देवताओंमें शिवजी है तैसेंही वैद्योंमें आत्रेयमुनि उत्तम है ॥ १२ ॥ इसवास्ते यतनसे उत्तम वैद्योंनें आदरसे सुंदर मनसे अत्रिमुनि पूजन करनेंको योग्य है और माननेंको योग्य है सुख संपत्ति इन्होंको देवेगा ॥ १३ ॥ इति वेरीनिवासिवुधशिवसहायपुत्रवैद्यरविदत्तशास्त्र्यनुवादितहारीतसंहितायां परिशिष्टाध्यायः ॥ १ ॥





## वैद्यकग्रंथाः।

| | | |
|---|---|---|
| ेत संहिता भाषाटीकासहित ··· ··· ··· ··· ··· | ३—० | ०—८ |
| ांगहृदय (वाग्भट) भाषाटीका अत्युत्तम वैद्यकग्रंथ सम्पूर्ण छपके तैयारहै | १०—० | १—० |
| निघंटुरत्नाकर प्रथमभाग ··· ··· ··· ··· ··· | ३—० | ०—६ |
| ःनिघंटुरत्नार द्वितीयभाग ··· ··· ··· ··· ··· | ३—० | ०—६ |
| ःनिघंटुरत्नाकर तृतीयभाग ··· ··· ··· ··· ··· | ३—८ | ०—८ |
| ःनिघंटुरत्नाकर चतुर्थभाग ··· ··· ··· ··· ··· | २—८ | ०—५ |
| ंराजसुंदर भाषाटीकासह मथुराका छापा पथ्यापथ्यभाषाटीका ··· | ०—१२ | ०—१॥ |
| ङ्गधर निदानसह भाषाटीका पं०दत्तराम चौबे मथुरानिवासीका बनाया | ३—० | ०—६ |
| मृतसार कोशसहित हिंदी भाषामें नवीन छपके तैयार है ··· ··· | २—४ | ०—८ |
| चिकित्साखण्ड भाषाटीका प्रथमभाग ··· ··· ··· ··· | ४—० | ०—१० |
| िकित्साक्रमकल्पवल्ली संस्कृत काशिनाथकृत ··· ··· ··· | २—८ | ०—८ |
| ाधवनिदान उत्तम भाषाटीका ··· ··· ··· ··· | २—८ | ०—८ |
| थरहस्यभाषाटीकासह ··· ··· ··· ··· ··· ··· | २—८ | ०—५ |
| र्याचंद्रोदयभाषाटीका ( व्यंजनबनानेका ग्रंथ ) ··· ··· | २—० | ०—४ |
| ोगतरंगिणी बहुतही उत्तम ··· ··· ··· ··· ··· | २—० | ०—४ |
| ीरसिंहावलोकन ज्योतिषशास्त्रादिकर्मविपाक चिकित्सा नवीन टाईपमें अति उत्तम ··· ··· ··· ··· ··· ··· | १—१२ | ०—४ |
| चिंतामणि भाषाटीका ··· ··· ··· ··· ··· ··· | १—४ | ०—४ |
| ठवराज वैद्यजीवन संस्कृतटीका और भाषाटीका ··· ··· | १—० | ०—४ |
| ीदर्पण नाडी देखनेमें अत्यंत उत्कृष्ट ··· ··· ··· ··· | ०—६ | ०—१ |
| ुपानदर्पण भाषाटीका सहित ··· ··· ··· ··· ··· | ०—१० | ०—१ |
| ठबोधपाकावली ··· ··· ··· ··· ··· ··· | ०—२ | ०—॥ |
| मुद्राख्यसटीक ··· ··· ··· ··· ··· ··· | ०—३ | ०—॥ |
| उज्ञान भाषाटीका ··· ··· ··· ··· ··· ··· | ०—२॥ | ०—॥ |
| ाभैषज्यमंजरीभाषाटीकासह ··· ··· ··· ··· | ०—३ | ०—॥ |
| ंजरी टिप्पणीसह ··· ··· ··· ··· ··· ··· | ०—८ | ०—१ |
| ाधातुसार भाषा ··· ··· ··· ··· ··· | ०—६ | ०—१ |
| द्वप्रकाश लघु ··· ··· ··· ··· ··· ··· | ०—२ | ०—॥ |
| महोदधि भाषा वैद्यक यूनानी हिकमत और यूनानीदवा फकीरोंकी जडी बूटी और सन्तोंकी पुस्तककी संग्रह है ··· | ०—१२ | ०—२ |

## ज्योतिषग्रंथाः ॥